THE

# KIRĀTĀRJUNĪYA

OF

# BHĀRAVI

WITH

The Commentary (Ghantāpatha) of Mallinatha

(Cantos 1 to 18)

V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

1939

THE

# KIRĀTĀRJUNĪYA

OF

## BHĀRAVI

WITH

The Commentary (Ghantāpatha) of Mallinatha

(Cantos 1 to 18)



V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

1939

॥ श्रीः ॥

महाकविश्रीभारविप्रणीतं

# ॥ किरातार्जुनीयम् ॥

महामहोपाध्याय कोलाचल मल्लिनाथसूरिकृतया

घण्टापथव्याख्यया समुल्लसितम्

( १-सर्गप्रभृति १८-सर्गपर्यन्तं )

चेन्नपुर्यां

वाविल्लमुद्रणालये सम्मुद्र्य प्रकाशितम्

१९३९

# ॥ भूमिका ॥

अस्मिन्नतिवितते महति समतीतवाक्प्रपञ्चे बहुविभवे भवे निरतनिगमशब्दतर्कादिसकलदर्शनाध्ययनजातकुतूहलानां सहृदयानां चित्तवृत्तिविहृत्युल्लासनिदानस्थानं सत्काव्यजातमेव सदुपवनमित्येषा प्रतीतिः केषां मनीषिणां रसिकोत्तमानां मनसि नोदीयात्। तत्र तावत् किरातार्जुनीयमित्याख्यया विख्यातमिदं काव्यं नीतिजालसमुल्लसितं सुमनोमनोहारिभिः निजगुणगणादिभिः न केनापि नव्येन काव्येन तुलामातुं शक्नुयादिति पण्डितप्रकाण्डानां काचन रुचिरा वार्तामाला। न हीयं कस्यचिदपि विप्रलम्भाय भवेदिति त एव विजानीयुः साहित्यपीयूषसेवनपरिणतमतयो विपश्चित्तमाः। प्रत्युत राजन्त एव समुदितरसान्यन्यानि काव्यान्यपि पुरस्तादस्य दिवसतारकाणीव।

अथ चात्र वाक्प्रसराः क्वचित् क्षत्रियनीतिप्रचुराः क्वचित् प्रकारान्तरेण रसपरिपूरिताः आनन्दसन्दोहवर्धकाश्च भवन्तीत्यत्र नाविदितमविद्यामुषां विदुषाम्। अस्य च कथासन्दर्भः श्रीमन्महाभारतीयारण्यपर्वकथानकानुसारीत्यपि न विशयलेशः कस्यापि।

अथ च किरातार्जुनीयाख्यस्यास्य काव्यस्य प्रणेतुः कविकुलतिलकस्य दिगन्तविश्रान्तकीर्तिलसितस्य निखिलविद्वन्निकुरुम्बनक्षत्रप्रकाशप्रलोपकरप्रभाकरस्य भारविनाम्नः कविसार्वभौमस्य समवतारभूमिता कस्य जनपदस्याजायतेति नाद्यावध्यपि महतां

धीमतां सर्वज्ञविज्ञानामपि सुविमले मनसि सुस्पष्टनिश्चयोऽभवत् । परन्तु घूर्जरदेशीयोऽयं पञ्चशतशकाब्दासन्नकालवर्तीति केषांचित् प्राचामालोचकानां विचारः ।

अथ कस्मिंश्चन प्राक्तने विमर्शे "किरातार्जुनीयपञ्चदश-सर्गादिकोंकारो दुर्विनीतनामधेयः" इति प्रमाणविशेषेण प्रकृत-काव्यस्य परिस्थितिः परमुपलभ्यते । विमर्शान्तरे तु निरुक्तप्रमाण-पूर्वतया परिदृश्यमानेन "येनायोजि नवेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म । स विजयतां रविकीर्तिः कविताश्रितकालिदासभारवि-कीर्तिः" ॥ इति च मानान्तरेण प्रस्तुतकवेः परिस्थितिश्चोपलभ्यते । एतन्मानप्रदर्शकयोः विमर्शयोः पूर्वापरीभावस्तु ग्रन्थान्तरे सुस्पष्ट इति नात्र विचारोऽस्ति महताम् । एतेनायं भारविः कविः सुप्रसिद्ध-कविकुलभूषणकालिदासवत् सङ्ख्यातीतां विख्यातिमभजत । ख्यातिश्च तादृशी क्रैस्तवाब्दीयषष्ठशतकात् प्राचीनतामस्य कवेः सूचयतीति निर्विवादोऽयं पन्थाः । इमामेव सरणिमनुसृत्य बहुत्र विमर्शकाः स्वस्वमतिकौशलप्रदर्शनपराः विविधान्यैतिह्यान्यपि न्यरू-पयन् । तत्र च "ह्वि एना ओरियन्टल् जर्नल्" नामा त्रैमासिक-पत्रविशेषोऽप्यस्य कवेः माघकवेरपि प्राचीनतामाचष्टे । किञ्च कालिदासोक्तं "तावद्भा भारवेः भाति यावन्माघस्य नोदयः" । इति पद्यमप्यस्य माघ पूर्वतायां साक्षिभूतं विराजते । माघोऽपि स्वीयशिशुपालवधाख्यकाव्ये प्रकृतकाव्यरचनाशैलीमनुससारेत्येतदपि प्रमाणं भवितुमर्हति चास्य कवेः माघकविप्राक्तनतायाम् ।

अथ चायं कविः बाल्ये वयसि स्वयमनन्यसाधारणप्रज्ञातिशयेन पण्डितवर्गं विजित्य निरुपमं यशः समभजत। सत्यप्येवं पिता चास्य वैदुष्ये परां तृप्तिमलभमानः प्रत्यहं कृत्याकृत्यविवेचनविधौ तीव्रामेव शिक्षां कुर्वन्नास्त। एवं गतेषु कतिपयाहस्सु कालेषु पित्रधिक्षेपवचनमसहमानः कविरयं पित्रोः पर्यङ्कतलशायिनोः स्वगोचरवचनमालपतोः सतोः स्वमुद्दिश्य पितरि प्रयुक्तं जननीवाक्यं गुप्तरूपेणेदृशमश्शृणुत 'भोप्राणवल्लभ! किन्निमित्तमयमस्सत्पुत्रः धीमदग्रेसरः विजितविश्वविद्वद्गणः प्रतिदिनं कठिनैः वाक्छल्यैः तुद्यते भवता सत्विदानीं यत्र कुत्रापि गतः क्व गत इति नाहं जाने' इति। तच्छ्रुत्वा चास्य पितात्वेवमकथयत्। 'अयि प्राणवल्लभे! सत्पुत्रप्रसवित्रि! मम महत्तरभाग्यवत्तया निखिलपण्डितविजेता निरुपमः सत्पुत्रस्समजनि। तादृशी च योग्यता महती पुत्रे समजायत। इतोऽप्यधिकयोग्यतासम्पादनायैवाहमेवमधिक्षिपामि' इति। तच्छ्रुत्वायं कविः पितरि जातानुशयः प्रभाते पितरं पप्रच्छ। "भो पितः! कस्यचन येन केनापि प्रकारेण पितृहननोद्यमे सङ्कल्पिते तत्पापप्रशमाय किमुचितं प्रायश्चित्तं विहितं" इति। तच्छ्रुत्वा पितोवाच "यः द्वादशवर्षाणि श्वशुरगृहे वसन्नजाचारणं करोति स एव स्वपितृघातदोषाद्विमुक्तो भवेत्" इति। तदाकर्ण्यायं पुत्रः तथैवाजागणं क्रीत्वा श्वशुरगृहे चारयन्नास्त। तदैवाकुरुतेदं काव्यरत्नम्। अतीतेषु च द्वादशसु वर्षेषु स्वावासभूम्यभिमुखं प्रस्थितस्सन् मध्येमार्गं कस्यचन राज्ञः परिसरं गत्वा "सहसा विदधीत न क्रियामविवेकः परमापदां पदम्" इति पद्यं विक्रीय लक्षत्रयमुद्राः गृहीत्वा समभजत गृहस्थाश्रमसौख्यम्॥

अत्रान्तरे कश्चन राजा स्वजायाया दुश्चरितमाकर्ण्य कर्णाकर्णिकयातिखिन्नस्सन्नपुनर्निवृत्तिं स्वस्य मृगयायाः स्वमहिष्यै कथयित्वा मृगयां प्रति प्रतस्थे। पुनरप्ययं राजा स्वपत्नीदोषपरीक्षायै पुनर्निवृत्त्य स्वसद्मनि शय्यागृहे केनाचिद्यूना सह शयानां प्रेयसीं स्वस्वरूपं प्रच्छाद्य गुप्तवेषेण वीक्ष्य जातकोपः तस्य जारस्य कण्ठं निशितकरवालेन छेत्तुं यावता कालेन करावूर्ध्वमक्षिपत् तावतैव करवालाग्रछिन्नां काञ्चन काष्ठपट्टिकां स्वहस्तपतितामपश्यत्। तत्र कञ्चन श्लोकमपठच्च। तदानीं तच्छ्लोकाकूतं विज्ञाय तदैव जारं विमुक्तावरणांशुकं विधाय विलोक्य स्वपुत्रमेव तं गुरुकुलादागतं मन्यमानः श्लोकस्यास्यैव वंशधरपुत्रसंरक्षणहेतुतां जानंश्चैतच्छ्लोकरचयित्रे भारविनाम्ने कवये कोटित्रयमुद्राः पारितोषिकरूपेण प्रादात्। अयं च भारविः कविः गृहीतपारितोषिकः सुखेन कालशेषमयापयत्। एवमेव बहुभिः श्लोकरत्नैः समलङ्कृतमिदं काव्यं प्रकाशयति साहित्यरसवित्तानां सचित्तानां मण्डलम्॥

इदं च महाकाव्यं सर्वविद्यामहोदधिः मल्लिनाथसूरिरेव कविहृद्गतभाववित् समुचितया गुणगणपरिष्कृतया सहृदयहृद्यया कुटिलमतिविलोपिनीतितन्त्रजालजटिलया मधुरमधुरयानतिसङ्कुचित - विस्तृतया घण्टापथसमाख्यया व्याख्यया समलञ्चकारेति महतां सतां धीमतां महानन्दसन्दोहभाजनतां भजते—

ग्रन्थोऽयं सर्वोपकारविधायीति लाभालाभावप्यनादृत्य श्रद्धया मुद्रितस्सन् सारग्राहिणां कृतिनां विदुषां सन्तोषावहो भूयादिति सविनयमावेदयामो वयम् इति।

**वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्, इत्येते.**

# ॥ किरातार्जुनीयस्य सर्गानुक्रमेण कथासङ्ग्रहः ॥

कथाः

सर्गाः

१ धर्मपुत्रस्य द्वैतवननिवासिना चारोत्तमेन समागमः वनेचरेण दुर्योधनस्य राज्यपरिपालनपद्धतिविज्ञानम्-पुनस्तेन युधिष्ठिरसमीपं प्रत्यागत्य दुर्योधनवृत्तान्तकथनम्-धर्मपुत्रंप्रति द्रौपदीवाक्यम् ॥

२ धर्मपुत्रभीमसेनयोस्संवादः-व्यासमुनिना पाण्डवसमीपं प्रत्यागमनम् व्यासमुनिं प्रति पाण्डवकृतसत्कारवर्णनम् ॥

३ विस्तरेण व्यासमुनेः स्वरूपवर्णनम्-मुनेः धर्मपुत्रस्य च संवादः-मुनिनार्जुनं प्रति विद्योपदेशः तपश्चरणाज्ञापनं प्रतिनिवृत्तिश्च-अर्जुनेन तपस्समाचरणार्थं गमनोपक्रमे पाण्डवानां तद्विरहासहिष्णुत्वेन मनोविकृतिः-अर्जुनद्रौपदीसंवादः-व्यासाज्ञया गुह्यकेन अर्जुनेन सह इन्द्रकीलं नाम हिमालयस्थानविशेषं प्रति गमनम् ॥

४ कविकृतं हिमालयदर्शनं शरदृतुवर्णनं च-गुह्यककृतशरद्वर्णनम् ॥

५ हिमालयवर्णनं अर्जुनेन तन्मूलप्राप्तिः गुह्यकेन यथागतं गमनम् ॥

६ इन्द्रकीलाख्यपादविशेषे अर्जुनस्यारोहणादिसन्दर्भकथनम् तत्रार्जुनस्य तपश्चर्योपक्रमः तपोवर्णनं च-इन्द्रकीलवनरक्षिभिः इन्द्रसमीपं गत्वार्जुनस्य तपोमहिमानुवर्णनम् इन्द्रेणार्जुनतपोविघ्नाचरणायाप्सरोगणप्रेषणम् ॥

७ गन्धर्वैस्सह गच्छन्तीनामप्सरसां विलासोल्लासवर्णनम्-इन्द्रकीलपर्वते प्राप्तानां गन्धर्वाणामप्सरसां रथगजादियुक्तस्य तच्छिबिरस्य वर्णनम् ॥

८ इन्द्रकीलपर्वते गन्धर्वाप्सरोभिः क्रियमाणपुष्पापचयक्रीडानुवर्णनम्-जलक्रीडानुवर्णनम् ॥

९ सायंकालचन्द्रोदयसुरतपानगोष्ठीनां वर्णनपूर्वकं संक्षेपेण प्रभातवर्णनम् ॥

१० अप्सरोभिः अर्जुनव्यामोहनाय तत्समीपप्रस्थानवर्णनपूर्वकमर्जुनवर्णनम्-ऋतुवर्णनम् अर्जुनावलोकनपुरस्सरमप्सरोभिः विलक्षणचेष्टाचरणम्-अप्सरकृतप्रयासवैफल्यकथनम् ॥

सर्गाः

११ मुनिवेषधारिणा शक्रेणार्जुनाश्रमं प्रत्यागमनम्-इन्द्रार्जुनयोस्संवादः-इन्द्रेणार्जुनं प्रति शिवाराधनस्य कर्तव्यताबोधनम् ॥

१२ अर्जुनेन शिवानुग्रहार्थं कृतस्य तपसो वर्णनम्-अर्जुनतपस्तप्तैः सिद्धतापसैः शिवसमीपमागत्य तत्तपोवृत्तकथनम् शिवेनार्जुनस्वरूपकथनपूर्वकं मुनिसान्त्वनम्-वराहरूपिणा मूकदानवेनार्जुनपराभवार्थमागमनम् तद्वधार्थं किरात रूपधारिण्या गणसेनया सहितस्य किरातवेषस्य रुद्रस्य मृगयापदेशेनार्जुनाश्रमागमनम् ॥

१३ वराहरूपिणा मूकदानवेनार्जुनसन्दर्शनम्-तद्दर्शनेनार्जुनस्य नानाविधवितर्कसम्भवः वराहं प्रति रुद्रेणार्जुनेन च बाणविसर्जनम्-वराहमरणवर्णनम्-वराहशरीराद्बाणमुद्धरन्तमर्जुनं प्रति शिवप्रेषितस्य वनेचरस्य कठिनोक्तिः ॥

१४ वनेचरं प्रत्यर्जुनवाक्यम्-वनेचरेण शिवं प्रत्यर्जुनवचनकथनम्-ससैन्येन कपटकिरातेन शिवेनार्जुनविजयार्थमागमनम्-शिवसैन्येनार्जुनयुद्धम् ॥

१५ युद्धवैचित्र्यवर्णनम् ॥

१६ अर्जुनस्य मायाकिरातयुद्धकौशलदर्शनेन वितर्कसम्भवः-शिवेन सहार्जुनस्यास्त्रयुद्धम् ॥

१७ रुद्रसेनया रुद्रेण चार्जुनस्य युद्धवर्णनम् ॥

१८ शिवार्जुनयोः बाहुयुद्धम्—रुद्रेणार्जुनस्य वीर्यातिशयविलोकनेनानुग्रहात् स्वस्वरूपप्रदर्शनम्-तदेन्द्रेण देवैस्सह तत्रागमनम् अर्जुनेन रुद्रभगवतः स्तुतिः वरयाचनं च-भगवता रुद्रेणार्जुनं प्रति पाशुपतास्त्रेण सह धनुर्वेदस्योपदेशः रुद्राज्ञया इन्द्रादिदेवैरपि अर्जुनं प्रति वरप्रदानं स्वस्वास्त्रप्रतिपादनं च-निर्वर्तितस्वकार्येणार्जुनेन रुद्राज्ञया धर्मपुत्रसमीपं प्रत्यागमनम्-ग्रन्थपरिसमाप्तिश्च ॥

---

# किरातार्जुनीयव्याख्यायां प्रमाणत्वेन
## ॥ समुदाहृतानां ग्रन्थानां ग्रन्थकाराणां च नामानि ॥

| नामानि | पुटम् | श्लोकः |
|---|---|---|
| अगस्त्यः | २७१ | ४० |
| अमरः | २ | १ |
| ,, | ३ | २ |
| ,, | ७ | ७ इत्यादि |
| आगमः | ३० | ३१ |
| ,, | ७० | ३७ |
| ,, | १७८ | ३ इत्यादि |
| आलङ्कारिकाः | २ | १ |
| ,, | ४० | ४४ |
| कामन्दकः | २२ | ३१ |
| ,, | ३४ | ६ |
| ,, | ३६ | १० इत्यादि |
| काव्यप्रकाशः | ८ | ८ |
| ,, | ११ | १२ |
| ,, | २७ | ३९ |
| काशिका | ४ | ३ |
| ,, | ६ | ६ |

| नामानि | पुटम् | श्लोकः |
|---|---|---|
| काशिका | १० | ११ इत्यादि |
| केशवः | ४१ | २१ |
| ,, | १६४ | २४ |
| ,, | १८० | ११ इत्यादि |
| कैयटः | २ | १ |
| ,, | ९ | १० |
| ,, | १५९ | ११ इत्यादि |
| क्षीरस्वामी | ८ | ९ |
| ,, | १६ | २१ |
| ,, | २०७ | ३ इत्यादि |
| गणव्याख्यानम् | ३९ | १७ |
| ,, | ४५ | ३० |
| ,, | ५९ | ६ |
| दण्डी | ३० | ४६ |
| ,, | १७१ | ४४ |
| दशरूपकम् | १८५ | २६ |
| ,, | १९२ | ४५ |
| धन्वन्तरिः | ९२ | २८ |
| नारदः | ११ | १३ |
| निरुक्तम् | १४१ | ९ |
| नीतिवाक्यामृतम् | २ | १ |
| ,, | ५ | ४ |

| नामानि | पुटम् | श्लोकः |
|---|---|---|
| नीतिवाक्यामृतम् | १९ | २६ इत्यादि |
| नृत्यविलासः | १७५ | ५४ |
| नैषधम् | १७३ | ४९ |
| न्यायः | १८ | २४ |
| ,, | ३४ | ५ |
| न्यासोद्योतः | ३९ | १७ |
| पालकाप्यम् | १४१ | ८ |
| पुराणम् | ४३ | २६ |
| प्रकाशवर्षः | ८४ | १० |
| भारतम् | ११० | ३० |
| ,, | २८१ | ११ |
| ,, | ३०८ | १० |
| भाष्यकारः | २ | १ |
| ,, | ९ | १० |
| ,, | १५९ | ११ इत्यादि |
| मनुः | ३४ | ६ |
| ,, | ३०६ | ६ इत्यादि |
| माघः | ९८ | ३ |
| ,, | १७३ | ४९ |
| मातङ्गः | ९३ | ३३ |
| मार्तण्डः | १६१ | १५ |
| यादवः | २३ | ३४ |

| नामानि | पुटम् | श्लोकः |
|---|---|---|
| शाश्वतः | ४१ | २२ |
| ,, | १४९ | २७ इत्यादि |
| सज्जनः | २९२ | ४५ |
| ,, | ३१५ | २७ |
| ,, | ३६४ | ५९ |
| सर्वस्वकारः | १५ | १८ |
| ,, | १८२ | १५ |
| सामुद्रिकाः | १२१ | १ |
| स्मरणम् | १२ | १३ इत्यादि |
| हलायुधः | ३६ | ३ |
| ,, | ९६ | ३८ इत्यादि |
| हैमः | २१ | २९ |
| ,, | ११८ | ४९ |
| ,, | २०७ | ३ |

श्रीहयग्रीवाय नमः

महाकवि श्रीभारविप्रणीतं

मल्लिनाथकृतया घण्टापथाख्यया व्याख्यया सहितं

# ॥ किरातार्जुनीयम् ॥

## ॥ प्रथमसर्गप्रारम्भः ॥

श्रियः कुरूणामधिपस्य पालनीं
  प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितस्समाययौ
  युधिष्ठिरं द्वैतवने वनेचरः ॥ १

---

## ॥ व्याख्यानपीठिका ॥

श्लो ॥ अर्धाङ्गीकृतदांपत्यमपि गाढानुरागि यत् । पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥ १ ॥ आलम्बे जगदालम्बं हेरम्बचरणाम्बुजं । शुष्यन्ति यद्रजस्स्पर्शात्सद्यः प्रत्यूहवार्धयः ॥ २ ॥ तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसच्छटाः ॥ ३ ॥ वाणीं काणभुजीमजीगणदवासीच्च वैयासकीमन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् । वाचामाचकलद्रहस्यमखिलं यच्चाक्षपादस्फुरां लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥ मल्लिनाथकविस्सोयं मन्दात्मानुजिघृक्षया । तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥ ५ ॥ नारिकेलफलसम्मितं वचो भारवेस्सपदि तद्विभज्यते । स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितं ॥ ६ ॥ नानानिबन्धविषमैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कं । कर्तुं प्रवेशमिह भारविकाव्य-

बन्धे घण्टापथं कमपि नूतनमातनिष्ये ॥ ७ ॥ इहान्वयमुखेनैव सर्वं व्याख्यायते मया, नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥

अथ तत्र भवान् भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयस्साधनतां 'काव्यालापांश्च वर्जयेदि'ति निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन् किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुख' मित्याचार्यदण्डिवचनादाशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन् कथामुपक्षिपति—

**श्रिय इति ॥** आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नातीवोपयुज्यते तदुक्तं । श्लो । 'देवतावाचकाश्शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्यास्स्युर्लिपितो गणतोऽपिवे'ति । कुरूणां निवासाः कुरवः जनपदविशेषाः 'तस्य निवास' इत्यणो जनपदे लुप् । तेषामधिपस्य सम्बन्धिनीं शेषे षष्ठी । श्रियः राजलक्ष्म्याः 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठी । पाल्यते अनयेति पालनी तां प्रतिष्ठापिकामित्यर्थः । प्रजानुरागमूलत्वात्संपद इति भावः । 'करणाधिकरणयो'श्चेति सूत्रेणात्र करणे ल्युट् 'टिड्ढाणञि'त्यादिना ङीप् । प्रजासु जनेषु विषये । नि । 'प्रजा स्यात्सन्ततौ जन' इत्यमरः । वृत्तिं व्यवहारं वेदितुं ज्ञातुं यं वनेचरं अयुङ्क्त नियुक्तवान् । वर्णः । श्लो । 'स्मरणं कीर्तनं केळिः प्रेक्षणं गुह्यभाषणं । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षण' मित्युक्ताष्टविधमैथुनाभावरूपा प्रशस्तिःवर्णोऽस्यास्तीति वर्णी ब्रह्मचारी 'वर्णाद्ब्रह्मचारिणी'ति णिनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी ब्रह्मचारिवेषवानित्यर्थः । सः नियुक्तः वने चरतीति वनेचरः किरातः । नि । 'भेदाः किरातशबरपुळिन्दा म्लेच्छजातय' इत्यमरः । 'चरेष्ट' इति टप्रत्ययः 'तत्पुरुषे कृतिबहुळ'मित्यलुक् । विदितं वेदनमस्यास्तीति विदितः परवृत्तान्तज्ञानवानित्यर्थः 'अर्शआदिभ्योच्' इत्यच्प्रत्ययः । अथवा कर्तरि कर्मधर्मोपचारा द्विदितवृत्तान्तो विदित इत्युच्यते उभयत्रापि । पीता गावः । भुक्ता ब्राह्मणाः । विभक्ता भ्रातरः । इत्यादिवत्साधुत्वं न तु कर्तरि क्तः । सकर्मकेभ्यस्तस्य विधानाभावात् अतएव भाष्यकारः । अकारो मत्वर्थीयः । विभक्त-

कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २

मेषामस्तीति विभक्ताः । पीतमेषामस्तीति पीताः । भुक्तमेषामस्तीति भुक्ता इति । अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः । पीतोदकाः पीताः । भुक्तान्ना भुक्ता इति अत्र लोपशब्दार्थमाह-कैयटः 'गम्यार्थस्याप्रयोगएव लोपोभिमतः । विभक्ता भ्रातर इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । पीता गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते । भुक्ता ब्राह्मणा इत्यत्र अन्नस्य भुक्तत्वं ब्राह्मणेषूपचर्यत' इति । तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितं वनेचरे उपचर्यते एतेन 'वनाय पीतप्रतिबद्धवत्सां पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' इत्येवमादयो व्याख्याताः । अथवा विदितः विदितवान् सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः 'आशितः कर्ता' इत्यादौ यथा । यथाहुः-श्लो । 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिकाक्रिये'तिप्रतीहारादिना ज्ञापित इति वा । द्वैतवने द्वैताख्ये तपोवने-यद्वा द्वे इते गते यस्मात्तत् द्वितं द्वितमेव द्वैतं तच्च तद्वनं च तस्मिन् । शोकमोहरहिते इत्यर्थः । स्थितमिति शेषः । युधि रणे स्थिरं युधिष्ठिरं धर्मराजम् 'हलदन्तात्सप्तम्यास्संज्ञाया'मित्यलुक् । 'गवियुधिभ्यां स्थिर' इति षत्वं । समाययौ सम्प्राप्तः । अत्र वने वनेचर इति द्वयोः स्वरव्यंजनसमुदाययोरेकदैवावृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन् सर्गे वंशस्थवृत्तम् । तल्लक्षणं तु । श्लो । 'जतौ तु वंशस्थमुदीरितं जरा'विति ॥ १

अथ—सम्प्रति तत्कालोचितमादर्शयन् तस्य वनेचरस्य गुणसम्पन्नत्वमाह:— ('ततः किमित्यत आहे'ति केषुचित्पुस्तकेषु)

**कृतप्रणामस्येति** ॥ कृतप्रणामस्य तत्कालोचितत्वात्कृतनमस्कारस्य सपत्नेन रिपुणा दुर्योधनेन । नि 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः जितां स्वायत्तीकृतां महीं भूमिं महीभुजे युधिष्ठिराय क्रियाग्रहणात्संप्रदानत्वं निवेदयिष्यतो ज्ञापयिष्यतः लृटस्सद्वेति शतृप्रत्ययः तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनो न चचालेत्यर्थः 'व्यथ

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ ३

---

भयचलनयो'रिति धातोर्लिट् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—न हीति। हि यस्मात् हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषाः मृषा मिथ्याभूतं प्रियं वक्तुं नेच्छन्ति । अन्यथा कार्यविघातकतया स्वामिद्रोहिणस्स्युरिति भावः 'अमौढ्यममांद्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणा' इति नीतिवाक्यामृते ॥ २

अव—तथापि प्रियार्हे राज्ञि कथं निष्ठुरोक्तिरित्याशंक्य स्वाम्यनुज्ञया न दूष्यतीत्याशयेनाह—

**द्विषामिति ॥** रहसि एकान्ते सः वनेचरः द्विषां शत्रूणां कर्मणि षष्ठी विघाताय द्विषो विहन्तुमित्यर्थः । 'तुमर्थाच्चभाववचना'दिति चतुर्थी । भाववचनाच्चेति तुमर्थे घञ् प्रत्ययः । अत्र तादर्थ्ये चतुर्थ्यामपि न दोषः तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते । विधातुं व्यापारं कर्तुं इच्छतः 'समानकर्तृकेषु तुमुन्' द्विषो हन्तुमुद्युञ्जानस्येत्यर्थः । अतएव भूभृतो युधिष्ठिरस्य अनुज्ञां अधिगम्य प्राप्य सुष्ठुभावस्सौष्ठवं शब्दसाधुत्वं 'सुष्ठुशब्दादव्ययादुद्गात्रा'दित्वादञ् प्रत्ययः । उदारस्य भावः औदार्यं अर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्ये । अत्रौदार्यशब्दस्य अजाद्यजन्तत्वेपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राल्पाच्तरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातशास्त्रस्यानित्यत्वज्ञापनान्न पूर्वनिपातः । उक्तं च काशिकायां 'अयमेव लक्षणहेत्वो'रिति निर्देशः पूर्वनिपातव्यभिचारिचिह्नमिति ते एव विशेषस्तयोर्वा विशेषः तेन शालते शोभत इति सौष्ठवौदार्यविशेषशालिनी तां । ताच्छील्ये णिनिः । विनिश्चितार्थां विशेषतः प्रमाणतः निर्णीतार्थां इति वक्ष्यमाणरूपां वाचं आददे स्वीकृतवान् वक्तुमुपचक्रम इत्यर्थः ॥ ३

अव—प्रथमं तावदप्रियनिवेदकमात्मानं प्रत्यक्षोभं याचते—

क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥



स किं सखा साधु न शास्ति योऽधिपं
हितान्न यस्संश्रृणुते स किं प्रभुः ।

---

**क्रियास्विति ॥** हे नृप क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैः अनुजीविभिर्भृत्यैः चारादिभिरित्यर्थः । चरन्तीति चराः तएव चाराः चरेः पचाद्यच् । अजन्तात्प्रज्ञादित्वादण् प्रत्ययः । तएव चक्षुर्येषां ते चारचक्षुषः तदुक्तं । श्लो । 'गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति पण्डिताः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जना' इति 'स्वपरमण्डलकार्यावलोकने चाराश्चक्षूंषि क्षितिपालकाना' मिति नीतिवाक्यामृते । प्रभवः निग्रहानुग्रहसमर्थाः स्वामिनः न वञ्चनीयाः न प्रतारणीयाः सत्यमेव वक्तव्या इत्यर्थः । चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे विनिपात इति भावः । अतः अवञ्चनीयत्वाद्धेतोः असाधु अप्रियं साधु वा प्रियंवा ? मदुक्तमिति शेषः । क्षन्तुं सोढुमर्हसि । यद्वा वा शब्द इवार्थे । असाधु साध्विव क्षन्तुमर्हसि कुतः हितं पथ्यं मनोहारि मनःप्रियञ्च वचो वाक्यं दुर्लभं दुष्प्रापं । अतो मद्वचोपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः ॥ ४

अव—तर्हि तूष्णींभाव एव वरमित्याशंक्याह—

**स इति ॥** यः सखा सुहृत् अमात्यादिः । अधिपं स्वामिनं प्रतिसाधु हितवाक्यं न शास्ति नोपदिशति । 'ब्रुविशासी'त्यादिना शासेर्दुहादित्वाद्द्विकर्मकत्वं । सः हितानुपदेष्टा पुरुषः कुत्सितः सखा किंसखा दुर्मंत्रीत्यर्थः । 'क्षेप' इति समासान्तप्रतिषेधः । तथा यः प्रभुः निग्रहानुग्रहासमर्थः स्वामी हितादाप्तजनात् हितोपदेष्टुस्सकाशात् 'आख्यातोपयोग' इत्यपादानत्वात्पञ्चमी । न संश्रृणुते न श्रृणोति हितमिति शेषः " समोगम्यृच्छीत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदं । अकर्मकत्वं वैवक्षिकं स हितमश्रोता प्रभुः कुत्सितस्वामी पूर्ववत्समासः । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं च स्वामिना । एवं च

सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५

निसर्गदुर्बोधमबोधविक्लवाः
क भूपतीनां चरितं क जन्तवः ।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६

---

राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह—सदेति । हि यस्मात् नृपेषु स्वामिषु अमा सह भवा अमात्याः तेषु च 'अव्ययात्त्यप्' अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वास्सम्पदः सदा रतिं अनुरागं कुर्वते कुर्वंति न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्र राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धेरैकमत्यलक्षण कारणस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्येण समर्थनात्कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तं—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति ॥ ५

अथ—सम्प्रति स्वाहङ्कारं परिहरति—

**निसर्गेति ॥** निसर्गदुर्बोधं स्वभावदुर्ग्रहं 'ईषद्दु'रित्यादिना खल् प्रत्ययः । भूपतीनां राज्ञां चरितं व्यापारः क अबोधविक्लवाः अज्ञानोपहताः जन्तवः मादृशाः पामरजनाः इदमीदृगिति निश्चेतुमसमर्था इत्यर्थः । क नोभयं सङ्घटत इत्यर्थः । तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां शत्रूणां नयवर्त्म षाड्गुण्यप्रयोगः । श्लो । 'सन्धिविग्रहयानानि संस्थाप्यासनमेवच । द्वैधीभावश्च विज्ञेयाष्षड्गुणा नीतिवेदिना' मित्यादि रूपः मया अवेदीति यत् ज्ञातमिति यत् विदेः कर्मणि लुङ् । अयं इदं वेदनमित्यर्थः । विधेयप्राधान्यात्पुल्लिङ्गनिर्देशः । तव अनुभावः सामर्थ्यं अनुगतो भावः अनुभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टात् घञ् प्रत्ययः श्रिणीभुवोनुपसर्ग इत्यनुपसर्गाद्विवतेर्घञ्विधानात् । अतएव काशिकायां 'कथं प्रभावोराज्ञां प्रकृष्टो भाव इति प्रादिसमास' इति । दोषपरिहारौ सम्यक् ज्ञात्वैव विज्ञापयामि न तु वृथा कर्णकठोरं प्रलपामीत्याशयः ॥ ६

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः ॥ ७

तथापि जिह्मस्स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।

---

अव—सम्प्रति यद्वक्तव्यं तदाह—

**विशङ्कमान इति** ॥ सुखेन योध्यते सुयोधनः 'भाषायां शासियुधिदृशि धृषिमृषिभ्यो युज्वक्तव्यः' नृपासने तिष्ठतीति नृपासनस्थः सिंहासनस्थोऽपि सर्वां महीं अधिष्ठितोऽपीत्यर्थः । वनमधिवसतीति वनाधिवासिनो वनस्थात् राज्यभ्रष्टादपीत्यर्थः । भवतः त्वत्तः पराभवं पराजयं विशङ्कमानः उत्प्रेक्षमाणस्सन् । दुष्टमुदरं यस्य तद्दुरोदरं द्यूतम् । पृषोदरादित्वात्साधुः । नि । 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदर' मित्यमरः । तस्य छद्मना मिषेण जितां लब्धां दुर्नयजितामित्यर्थः । जगतीं महीं नि 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयो'रिति वैजयन्ती । नयेन नीत्या जेतुं वशीकर्तुं समीहते व्याप्रियते न तूदास्त इत्यर्थः । बलवत्स्वामिकमविशुद्धागमं च धनं भुञ्जानस्य कुतो मनस्समाधिरिति भावः । अत्र दुरोदरच्छद्मजितामिति विशेषणद्वारेण पदार्थस्य चतुर्थपादार्थं प्रति हेतुत्वेनोपन्यासाद्द्वितीयकाव्यलिङ्गमलङ्कारः । तदुक्तं श्लो । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृत' मिति ॥ ७

अव—'नयेन जेतुं जगतीं समीहत' इत्युक्तं तत्प्रकारमेवाह—

**तथापीति** ॥ तथापि साशङ्कोऽपि जिह्मः वक्रः वञ्चक इति यावत् सः दुर्योधनः भवज्जिगीषया गुणैः भवन्तमतिक्रमितुमिच्छयेत्यर्थः । हेताविति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणगरिम्णा करणेन शुभ्रं निर्मलं यशः ख्यातिं तनोति स खलो गुणविशेषलोभनीयां त्वत्सम्पदमात्मसात्कर्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनस्सतोऽपि सज्जनविरोधो महांस्तस्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गादिलाभेन नोचसंसर्गाद्वरमुत्कर्षावहत्वा-

समुन्नयन् भूतिमनार्यसङ्गमा-
द्वरं विरोधोऽपि समं महात्मभिः ॥ ८

कृतारिषड्वर्गजयेन मानवी-
मगम्यरूपां पदवीं प्रपित्सुना ।

---

दित्याह समुन्नयन्निति । तथाहि । भूतिं सम्पदं समुन्नयन् उत्कर्षमापादयन् 'लटश्शतृशानचा'वित्यादिना शतृप्रत्ययः। पुनर्लड्ग्रहणसामर्थ्यात्प्रथमा सामानाधिकरण्यं। महात्मभिस्समं सत्पुरुषैस्सहेत्यर्थः। नि। 'साकं सत्रा समं सहे' त्यमरः । विरोधोपि अनार्यसङ्गमाद्दुर्जनसंसर्गात् 'पञ्चमीविभक्त' इति पञ्चमी। वरं। मनाक्प्रियम्। नि। 'दैवाद्वृते वरश्श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इत्यमरः। अत्र भूत्युत्कर्षकत्वात् मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य। भूतिं समुन्नयन्नित्यस्य पदार्थस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्तत्वाख्यदोषापत्तिः । तदुक्तं। श्लो। 'समाप्तपुनरादाने समाप्तपुनरात्तक' मिति नच वाक्यान्तरमेतत् येनोक्तदोषपरिहारस्स्यात् । अर्थान्तरन्यासोऽलङ्कारः । स च भूतिसमुन्नयनस्य पदार्थस्य विशेषणद्वारा विरोधपरत्वं प्रतिहेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८

अव—ननु कातर्यं केवला नीतिरित्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह—

**कृतेति ॥** षण्णां वर्गः षड्वर्गः अरीणामन्तश्शत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः । शिवभागवतवत्समासः। तस्य जयः कृतो येन तेन तथोक्तेन विनीतेनेत्यर्थः। विनीताधिकारं प्रजापालनमिति भावः। अगम्यरूपां पुरुषमात्रेण दुष्प्रापरूपां मनोरिमां मानवीं मनूपदिष्टसदाचारक्षुण्णामित्यर्थः। पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रपत्तुमिच्छुना प्रपद्यतेस्सन्नन्तादुप्रत्ययः । 'सनि मीमे' त्यादिना इसादेशः। अत्र लोपोभ्यासस्येत्यभ्यासलोपः। अस्ता तन्द्रिः आलस्यं यस्य तेन अस्ततन्द्रिणा अनलसेनेत्यर्थः। तदिस्सौत्रो धातुः तस्माद्वङ्क्यादयश्चेत्यौणादिकः । क्रिन् प्रत्ययः। कृदिकारादक्तिनो वाङीष्वक्तव्य इति ङीषि 'वन्दीघटीतरीतन्द्री'ति ङीषन्तोपीति क्षीरस्वामी। तथा श्रीरामायणे प्रयोगश्च श्लो॥ 'निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवि' दिति । तेन दुर्योधनेन पुरुषस्य कर्म पौरुषं पुरुषकारः उद्योग इति यावत्। युवादित्वादणूप्रत्ययः । नि। 'पौरुषं पुरुषस्योक्ते

विभज्य नक्तंदिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ९

सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥ १०

---

भावे कर्मणि तेजसो'ति विश्वः । नक्तं च दिवा च नक्तंदिवं अहोरात्रमित्यर्थः । अचतुरेत्यादिना सप्तम्यर्थः । वृत्त्यो रव्ययो द्वन्द्व निपातेऽच् समासान्तः विभज्य अस्यां वेळायामिदं कार्यमिदमकार्यमिति भागं कृत्वा तथा च रक्षाभयदाने आयव्ययोपदर्शनम् । पौरजानपदानां कार्यवीक्षणं । स्नानभोजनाद्युपसेवनं । जलक्रीडार्थमुद्यानादिगमनं । करितुरगरथसेवनं । सेनासख्यादिपरिक्षयोदय-चिन्तनं चेति नयेन नीत्या वितन्यते विस्तार्यते ॥ ९

अव—सम्प्रति भृत्याद्यनुरागमाह—

**सखीनिति ॥** गतस्मयो निरहङ्कारः अतएव स दुर्योधनः सन्ततं नित्यं साधु सम्यक् । अकपटमित्यर्थः । अनुजीविनो भृत्यान् प्रीतियुजस्सत्कारेण युक्तान् स्निग्धान् सखीनिव मित्राणीव दर्शयते लोकस्येति शेषः । 'हेतुमति' चेतिणिच् 'णिच'श्चेत्यात्मनेपदं । शोभनं हृदयं येषां ते सुहृदो मित्राणि च 'सुहृद्दुर्हृदौ मित्रामित्रयो'रिति निपातः । बन्धुभिर्भ्रात्रादिबन्धुभिः समानमानान् तुल्यबहुमानान् दर्शयते बन्धूनां समूहो बन्धुता तां 'ग्रामजनबन्धुभ्य स्तल्' कृतं आधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते बन्धूनधिपतीनिव दर्शयत इत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान् सम्भावयतीत्यर्थः । अत्र । अनुजीव्यादीनां 'कर्तुरीप्सिततमं कर्मे'ति कर्मत्वं । पूर्वं तस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति स राजा अनुजीव्यादीन् सख्यादीनिव दर्शयते । सख्यादय इव ते तं पश्यन्ति सख्यादिभावेन पश्यतस्तान् तथा दर्शयते स्वयमेव च्छन्दानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः । अर्थात् स्वस्येप्सितकर्मत्वं अणिकर्तुरनुजीव्यादेः । अभिवादिदृशोरात्मनेपदमित्युपसंख्यानमिति पाक्षिकं कर्मत्वं । एवं चात्राण्यन्तकर्मणो राज्ञो ण्यन्ते कर्तृत्वेपि आरोहयते हस्ती स्वय-

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवा-
न्न बाधतेऽस्य त्रिगुणः परस्परम् ॥ ११

---

मेवेत्यादिवदश्रूयमाणकर्मान्तरत्वाभावान्नायं णेरणादिसूत्रस्य विषय इति मत्वा णिचश्चेत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु णेरणादिसूत्रविषयत्वमेवास्योक्तं यथाह पश्यन्ति भृत्या राजानं। दर्शयते भृत्यान् राजा अत्रात्मनेपदं सिद्धं भवतीति। अत्राह कैयटः 'ननु कर्मान्तरसद्भावादत्रात्मनेपदेन न भाव्यम्। उच्यते अस्मादेवोदाहारणाद्भाष्यकारस्यायमभिप्राय ऊह्यते अण्यन्तावस्थायां ये कर्तृकर्मणी-तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति। यथा स्थलमारोहयति मनुष्यानिति इह त्वण्यन्तावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपद'मिति ॥ १०

अव—नचायं त्रिवर्गात्प्रसाद्यतीत्याह—

**असक्तमिति ॥** यथायथं यथास्वं विभज्य असंकीर्णरूपं विविच्येत्यर्थः। 'यथास्वे यथायथ'मिति निपातनाद्द्विर्भावो नपुंसकत्वं च। 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ह्रस्वत्वं। पक्षे पातः पक्षपातः आसक्तिविशेषः समस्तुल्यो यस्यां तया समपक्षपातया भक्त्या अनुरागविशेषेण पूज्येष्वनुरागो भक्तिरित्युपदेशः। पूज्यश्चायं त्रिवर्ग इति। असक्तमनासक्तं अव्यसनितयेति यावत्। आराधयतः सेवमानस्यास्य दुर्योधनस्य त्रयाणां धर्मार्थकामानां गणः त्रिवर्गः। नि। 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गस्समोक्षकै'रित्यमरः। गुणानुरागात्तदीयगुणेष्वनुरागाद्गुणवदाश्रयलोभादित्यर्थः। सख्युर्भावस्सख्यं मैत्रीं 'सख्युर्य'इतियप्रत्ययः। ईयिवानिवोपगत इवेत्युत्प्रेक्षा 'उपेयिवाननाश्वाननूचान'श्चेति क्वसुप्रत्ययान्तो निपातः नात्रोपसर्गस्तन्त्रमिति काशिकाकार आहस्म। परस्परं न बाधते न रुणद्धि समवर्तित्वादस्य धर्मार्थकामाः परस्परानुपमर्देन वर्धन्त इत्यर्थः। उक्तं च। श्लो। 'धर्मार्थकामास्समसमेव सेव्या यो ह्येकसक्तस्स नृपो जघन्यः' इति ॥ ११

निरत्ययं साम न दानवर्जितं
न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्तते तस्य विशेषशालिनी
गुणानुरोधेन विना न सत्क्रिया ॥ १२

वसूनि वाञ्छन् न वशी न मन्युना
स्वधर्म इत्येव निवृत्तकारणः ।

---

अव—अथ श्लोकत्रयेण उपायकौशलं दर्शयन्नादौ सामदाने दर्शयति—

**निरत्ययमिति ॥** तस्य दुर्योधनस्य निरत्ययं निर्बाधं अमायिकमित्यर्थः। अन्यथा जनानां दुर्ग्रहत्वादिति भावः। साम सान्त्वं। नि। 'साम सान्त्वमुभे समे' इत्यमरः। दानवर्जितं दानरहितं न प्रवर्तते अन्यथा लुब्धाद्यावर्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः। उक्तं च। श्लो। 'लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्मणा। मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डित' मितितथा भूरि प्रभूतं न तु कदाचिदल्पमित्यर्थः। दानं धनत्यागः सदित्यादरार्थेऽव्ययं। 'आदरानादरयोस्सदसती' इति निपातसंज्ञास्मरणात्। तस्य क्रिया सत्क्रिया तां पूजां विरहय्य विहाय 'ल्यपि लघुपूर्वादित्ययादेशः। न प्रवर्तते अनादरे दानवैफल्यादिति भावः। न चैवं सर्वत्र येनाविवेकित्वं कोशहानिश्च स्यादित्याह—प्रवर्तत इति। विशेषशालिनी अतिशययोगिनी सत्क्रिया सत्कारः गुणानुरोधेन गुणानुसारेण विना न प्रवर्तते। 'पृथग्विने'त्यादिना तृतीया गुणिष्वेवादरो भूरिदानंचेति नोक्तदोषावकाश इत्यर्थः। अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनादेकावल्यलङ्कारः। तदुक्तं काव्यप्रकाशे। श्लो. 'स्थाप्यतेऽपोह्यते वापि यथापूर्वं परम्परं। विशेषणतया वस्तु यत्र सैकावली द्विधे'ति ॥ १२

अव—अथ दण्डप्रकारमाह—

**वसूनीति ॥** वशी इन्द्रियनिग्रहवान् सः दुर्योधनः वसूनि धनानि वाञ्छन् न लोभान्नेत्यर्थः। नि। 'वसु तोये धने मणा'विति वैजयन्ती। निहन्तीति शेषः॥ तथा मन्युना क्रोधेन न च। नि। 'मन्युर्दैन्ये क्रतौ क्रुधी' त्यमरः। धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित इति स्मरणादित्यर्थः। किन्तु निवृत्तकारणः

गुरूपदिष्टेन रिपौ सुतेपि वा
निहन्ति दण्डेन स धर्मविप्लवम् ॥ १३

विधाय रक्षान् परितः परेतरा-
नशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः
कृतज्ञतामस्य वदन्ति सम्पदः ॥ १४

---

निवृत्तलोभादिनिमित्तस्सन् स्वधर्म इत्येव स्वस्य राज्ञस्सतो ममायं धर्मः । ममेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः । श्लो। 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चाधिगच्छती'ति स्मरणादिति भावः । गुरूपदिष्टेन प्राड्विवाकोपदिष्टेन । 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद्व्यवहारानानुक्रमा'दिति नारदस्मरणात् । दण्डेन दमेन शिक्षयेत्यर्थः । रिपौ सुतेपि वा स्थितमिति शेषः। एतेनास्य समदर्शित्वमुक्तं । धर्मविप्लवं धर्मव्यतिक्रमं अधर्ममिति यावत् । निहन्ति निवारयति दुष्टएवास्य शत्रुः शिष्टएव बन्धुः न तु सम्बन्धनिबन्धनः पक्षपातोऽस्तीत्यर्थः॥ १३

अव—सम्प्रति भेदकौशलं दर्शयति—

विधायेति ॥ शङ्कास्य सञ्जाता शङ्कितः अविश्वस्तस्सन् परितस्सर्वत्र स्वपरमण्डले परेतरानात्मीयानवञ्चकानिति यावत् । यद्वा परानितरयन्ति भेदेनात्मसात्कुर्वन्तीति परेतरान् 'तत्करोती'ति ण्यन्तात्कर्मण्यण् प्रत्ययः । रक्षन्तीति रक्षान् मन्त्रगुप्तिसमर्थानित्यर्थः। 'नन्दिग्रही'त्यादिना पचाद्यच् । विधाय कृत्वा नियुज्येत्यर्थः । अशङ्किताकारमुपैति स्वयमविश्वस्तोपि विश्वस्तवदेव व्यवहरन् परमुखेनैव परान् भिनत्तीत्यर्थः । न च तान् रक्षानुपेक्षते येन तेपि विकुर्वीरन्नित्याह—क्रियेति । क्रियापवर्गेषु कर्मसमाप्तिषु अनुजीविसात्कृता भृत्याधीनाः कृताः अपरावर्तितया दत्ता इत्यर्थः। 'देयेत्रा'चेति सातिप्रत्ययः। सम्पदः अस्य राज्ञः कृतज्ञतां उपकारज्ञत्वं वदन्ति दानैरेव कृतज्ञत्वं प्रकाश्यते । न तु वाग्जालेनेत्यर्थः । कृतज्ञे राजन्यनुजीविनोऽनुरज्यन्ते अनुरक्ताश्च तं रक्षन्तीति भावः॥ रक्षामिति पाठे 'गुरोश्च हल' इत्यकारप्रत्ययः। परितस्समन्तात् रक्षां विधाय परानितरांश्चाशङ्किताकारं यथा तथा उपैति । शेषं समानम् ॥ १४

अनारतं तेन पदेषु लम्भिता
विभज्य सम्यग्विनियोगसत्क्रियाः ।
फलन्त्युपायाः परिबृंहितायती-
रुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५

अनेकराजन्यरथाश्वसङ्कुलं
तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः ॥ १६

---

अव—अथोपायप्रयोगस्य फलवत्तां दर्शयति—

**अनारतमिति ॥** तेन राज्ञा दुर्योधनेन पदेषु उपादेयवस्तुषु । नि । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तु' ष्वित्यमरः । सम्यगसङ्कीर्णं अव्यस्तं च विभज्य विविच्य विनियोगएव सत्क्रिया अनुग्रहः सत्कार इति यावत् । यासां ताः लम्भिताः । स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः । विनियोगसत्क्रियामिति पाठे विनियोगसत्क्रियां लम्भिताः प्रापिता इत्यर्थः । अर्थसम्पद्विशेषणं उपायविशेषणं वा उपायास्सामादयः सङ्घर्षं परस्परस्पर्धां उपेत्येवेत्युत्प्रेक्षा । परिबृंहितायतीः प्रचितोत्तरकालाः स्थिरा इत्यर्थः ॥ अर्थसम्पदः धनोपचयान् अनारतमजस्रं फलन्ति प्रसुवत इत्यर्थः ॥ १५

अव—अर्थसम्पदमेवाह—

**अनेकेति ॥** अयुग्मच्छदस्य सप्तपर्णप्रसूनस्य गन्ध इव गन्धो यस्य सः अयुग्मच्छदगन्धिः 'सप्तम्युपमा'नेत्यादिना बहुव्रीहिरुत्तरपदलोपश्च उपमानाच्चेति समासान्त इकारः । नृपाणामुपायनानि उपहारभूता ये दन्तिनः तेषां मदः । नि । 'उपायनमुपग्राह्यमुपहारस्तथोपदे' त्यमरः । राज्ञामपत्यानि पुमांसो राजन्याः क्षत्रियाः । राजश्वशुराद्यत् राज्ञोजातावेवेति वाच्य'मिति' यत्प्रत्ययः 'येचाभावकर्मणो'रिति प्रकृतिभावः । रथाश्चाश्वाश्च रथाश्वं सेनाङ्गत्वादेकवद्भावः । अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं सम्बाधं तदीयं तत्सम्बन्धि आभिमुख्येन तिष्ठन्त्यस्मिन्नित्यास्थानं आस्थाननिकेतनाजिरं सभामण्टपाङ्गणम् । नि । 'अङ्गणं

सुखेन लभ्या दधतः कृषीवलै-
रकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृका-
श्चिराय तस्मिन् कुरवश्चकासति ॥ १७

उदारकीर्तेरुदयं दयावतः
प्रशान्तबाधं दिशतोऽभिरक्षया ।

---

चत्वराजिरे' इत्यमरः । भृशमत्यर्थं आर्द्रतां पङ्किलत्वं नयति । एतेन महासमृद्धिरस्योक्ता अत एवोदात्तालङ्कारः । तथा चालङ्कारसूत्रम् । समृद्धिमद्वस्तुवर्णनमुदात्तइति ॥ १६

अव—सम्प्रति जनपदक्षेमङ्करत्वमाह—

**सुखेनेति ॥** चिराय तस्मिन् दुर्योधने क्षेमं वितन्वति क्षेमङ्करे सति देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः ते न भवन्तीत्यदेवमातृकाः नदीमातृका इत्यर्थः । नि। 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रम' मित्यमरः । एतेनास्य कुल्यादिपूर्तप्रवर्तकत्वमुक्तं। कुरूणां निवासः कुरवः जनपदविशेषाः कृष्टेन कर्षणेन पच्यन्त इति कृष्टपच्याः। 'राजसूये'त्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः। तद्विपरीता अकृष्टपच्या इव कृषिरेषामस्तीति कृषीवलाः कर्षकाः तैः 'रजःकृषी' त्यादिना वलच्प्रत्ययः। वल इति दीर्घः। सुखेन अक्लेशेन लभ्याः लब्धुं शक्याः सस्यसम्पदः दधतः धारयन्तः सन्तः 'नाभ्यस्ताच्छतु'रिति नुमागमप्रतिषेधः चकासति दीप्यन्ते। सर्वोत्कर्षेण वर्तन्त इत्यर्थः । 'अभ्यस्तादि'ति झेरदादेशः जक्षित्यादयष्षडित्यभ्यस्तसंज्ञा । सम्पन्नजनपदत्वादसन्तापकरत्वाच्च दुस्साधोयमिति भावः ॥ १७

अव—नन्वेवं जनपदानुवर्तिनः कथमर्थलाभ इत्यत्राह—

**उदारेति ॥** उदारकीर्तेर्महायशसः । नि। 'उदारो दातृमहतो' रित्यमरः। दयावतः परदुःखप्रहाणेच्छोः अत एव प्रशान्तबाधं प्रशमितोपप्लवं यथा स्यात्तथेति क्रियाविशेषणं उदयविशेषणं वा वादान्तशान्तेत्यादिना शमधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेन उदयं वृद्धिं दिशत-

स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता
वसूपमानस्य वसूनि मेदिनी ॥ १८

महौजसो मानधना धनार्चिता
धनुर्भृतस्संयति लब्धकीर्तयः ।
न संहतास्तस्य न भिन्नवृत्तयः
प्रियाणि वांछन्त्यसुभिस्समीहितुम् ॥ १९

---

स्सम्पादयतः वसूपमानस्य कुबेरोपमस्य । नि । 'वसुर्मयूखाग्निधनाधिपे'ष्विति विश्वः । अस्य दुर्योधनस्य गुणैः दयादाक्षिण्यादिभिः करणैः उपस्नुता द्राविता वात्सल्याद्वशं गता मेदिनी वसूनि धनानि । नि । 'वसुतोये धने मणा' विति वैजयन्ती । स्वयं प्रदुग्धे अक्लेशेन दुह्यत इत्यर्थः । 'दुहेः कर्मकर्तरि लट्' 'न दुहस्नुनमांयक्चिणा'विति यक्प्रतिषेधः। यथा केनचिद्विदग्धेन रक्षिता नवप्रसूता च गौः स्वयं प्रदुग्धे तद्वदिति भावः । अलङ्कारस्तु समासोक्तिः "प्रस्तुतविशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरित्यलङ्कारसर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृताया मेदिन्या भेदेऽप्यभेदलक्षणातिशयोक्तिवशाद्दोह्यत्वेनोक्तिरिति संक्षेपः ॥ १८

अथ—वीरभटानुकूल्यमाह—

**महौजस इति** ॥ महौजसो महाबलाः । अन्यथा दुर्बलानामनुपकारित्वादिति भावः । मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः अन्यथा कदाचिद्बलदर्पाद्विकुर्वीरन्निति भावः । धनार्चिताः धनैः सत्कृताः अन्यथा दारिद्र्यादेनं जह्युरिति भावः । संयति सङ्गरे लब्धकीर्तयः प्राप्तयशसः बहुशः क्षुण्णा इत्यर्थः । अन्यथा कदाचिन्मुह्येयुरिति भावः । संहता मिथस्सङ्गताः स्वार्थनिष्ठा न भवन्तीति न संहताः नञर्थस्य नशब्दस्य सुप्सुपेति समासः भिन्नवृत्तयः मिथोविरोधात्स्वामिकार्यविरुद्धक्रिया न भवन्तीति नभिन्नवृत्तयः पूर्ववत्समासः । अन्यथा स्वामिकार्यविघातुकतया स्वामिद्रोहिणस्स्युरित्युभयत्रापि तात्पर्यं । धनुर्भृतो धानुष्काः । आयुधीयमात्रोपलक्षणमेतत् । प्राधान्याद्धनुर्ग्रहणं । तस्य दुर्योधनस्य असुभिः प्राणैः प्रियाणि समीहितुं कर्तुं वांछन्ति आनृण्यार्थं प्राणान् दातुमिच्छन्तीत्यर्थः । अन्यथा दोषस्मरणादिति भावः ।

महीभृतां सच्चरितैश्चरैः क्रिया-
स्स वेद निश्शेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः
प्रतीयते धातुरिवेहितं फलैः ॥ २०

न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥ २१

---

अत्र महोजस्त्वादिपदार्थानां प्राणदानकर्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात्काव्यलिङ्गमलङ्कारः । लक्षणं तूक्तं तथा साभिप्रायविशेषणत्वात्परिकरालङ्कारश्चेति द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः ॥ १९

अथ—सम्प्रति स्वराष्ट्रवृत्तान्तवत्परराष्ट्रवृत्तान्तमपि सवेत्तीत्याह—

**महीभृतामिति ॥** अशेषितक्रियः समापितकृत्यः आफलोदयकर्तेत्यर्थः स दुर्योधनः । सच्चरितैश्शुद्धचरितैरवञ्चकैरित्यर्थः । चरन्तीति चराः तैः प्रणिधिभिः पचाद्यच् । महीभृतां क्रियाः कार्यारम्भान् निश्शेषं वेद वेत्ति । 'विदोलटो' वेति णलादेशः । स्वरहस्यं तु न कश्चिद्वेदेत्याह—महोदयैरिति । धातुरिव ब्रह्मण इव तस्य दुर्योधनस्य ईहितमुद्योगः महोदयैर्महावृद्धिभिः हितं पथ्यमनुबध्नन्ति अनुसरन्तीति हितानुबन्धिभिः । स्वन्तैरित्यर्थः । फलैः कार्यसिद्धिभिः प्रतीयते ज्ञायते फलानुमेयास्तस्य प्रारम्भा इत्यर्थः ॥ २०

अथ—मित्रबलमाह—

**नेति ॥** तेन राज्ञा क्वचित्कुत्रापि सह ज्यया मौर्व्या सज्यं । नि । 'मार्वी ज्या शिञ्जिनीगुण' इत्यमरः । 'तेन सहेति तुल्ययोग' इति बहुव्रीहिः—धनुः नोद्यतं नोर्ध्वीकृतं । आननं वा कोपविजिह्मं कोपकुटिलं न कृतं यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भावः । कथं तर्ह्याज्ञां कारयन्ति राज्ञ इत्यत्राह—गुणेति । गुणेषु दयादाक्षिण्यादिगुणेषु अनुरागेण प्रेम्णा माल्यपक्षे सूत्रानुषङ्गेण । यद्वा सौरभगुणलोभेन । नराधिपैरस्य दुर्योधनस्य शासनमाज्ञा

स यौवराज्ये नवयौवनोद्धतं
निधाय दुश्शासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम् ॥ २२

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलं भुवः ।

---

मालैव माल्यं चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञिति क्षीरस्वामी । तदिव शिरोभिरुह्यते धार्यते । 'वचि स्वपि यजादीनां किती'ति यकि सम्प्रसारणं । अत्रोपमा स्फुटैव । माल्यसादृश्यकथनमाज्ञायाः प्रेमख्यापनार्थम् ॥ २१

अव—सम्प्रत्यस्य धार्मिकत्वमाह—

**स इति ॥** इद्धशासनः दीप्ताज्ञः । अप्रतिहताज्ञ इत्यर्थः । स दुर्योधनः नवयौवनोद्धतं प्रत्यग्रयौवनगर्वितं प्रगल्भधुरन्धरमित्यर्थः । दुःखेन शास्यत इति दुश्शासनः 'भाषायां शासि युधी'त्यादिना खलर्थे युच्प्रत्ययः तं यौवराज्ये युवराजकर्मणि ब्राह्मणादित्वात् ष्यञ् प्रत्ययः । निधाय नियुज्येत्यर्थः । पुरोधसा पुरोहितेन अनुमतः अनुज्ञातः तस्मिन् याजके सतीत्यर्थः । तदुल्लङ्घने दोषस्मरणादिति भावः । 'निष्ठे'ति भूतार्थे क्तः । न तु गति बुद्धीत्यादिना वर्तमानार्थे । अन्यथा पुरोधसेत्यत्र क्तस्य च वर्तमान इति षष्ठी स्यात् । अखिन्नः अनलसः मखेषु क्रतुषु हिरण्यं रेतो यस्य तं हिरण्यरेतसं अनलं हव्येन हवनीयेन धिनोति प्रीणयति । धिन्वेः प्रीणनार्थाद्धिन्विकृण्व्योरचेत्युप्रत्ययः । अकारश्चान्तादेशः ॥ २२

अव—न चैतावता निरुद्योगैर्भाव्यमित्याशंक्याशां दर्शयति—

**प्रलीनेति ॥** सः दुर्योधनः प्रलीनभूपालं निस्सपत्नमित्यर्थः । स्थिरायति चिरावसायोत्यर्थः । भुवो मण्डलं आवारिधिभ्यः आवारिधि चतुस्समुद्रपर्यन्तमित्यर्थः 'आङ्मर्यादाभिविध्यो'रित्यव्ययीभावः । प्रशासदाज्ञापयन्नपि । जक्षित्यादयष्षडित्यभ्यस्तसंज्ञा नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः । त्वत् त्वत्तः एष्यतीरागमिष्यतोरागामिनीः धातूनामनेकार्थत्वादुक्तार्थसिद्धिः । अथवा आङ् पूर्वः पाठः 'एत्येधत्यूठ्'स्विति वृद्धिः । लृटस्सद्वेति शतृप्रत्ययः । उगितश्चेति ङीप् । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । भियो भयहेतून् विपद इत्यर्थः ।

स चिन्तयत्येव भियस्त्वदेष्यती-

रहो दुरन्ता बलवद्विरोधिता ॥ २३

कथाप्रसङ्गेन जनैरुदाहृता-

दनुस्मृताखण्डलसूनुविक्रमः ।

तवाभिधानाद्व्यथते नताननः

स्सुदुस्सहान्मन्त्रपदादिवोरगः ॥ २४

---

चिन्तयति आलोचयत्येव । स एवाह । अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना सार्वभौमस्यापि प्रबलैस्संपन्नैस्सह वैरमनर्थपर्यवसाय्येवेत्याश्चर्यं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २३

अव—ननु गूढाकारेङ्गितस्य भयं त्वया कथं निरधारीत्यत्राह—

**कथेति** ॥ कथाप्रसङ्गेन गोष्ठीवचनेन जनैः तत्रत्यैरित्यर्थः। अन्यत्र कथाप्रसङ्गेन विषवैद्येन। नि। 'कथाप्रसङ्गो वार्तायां विषवैद्येपि वाच्यव'दिति विश्वः। एकवचनस्यातन्त्रत्वाज्जनविशेषणं। यद्वा कथाप्रसङ्गे इनाश्च ते जनाश्चेत्येकं पदं उदाहृतादुच्चरितात्तवाभिधानान्नामधेयात् स्मारकाद्धेतोः हेताविति पञ्चमी। नि। 'आख्याह्वे अभिधानं च नामधेयं च नामचे' त्यमरः। अन्यत्र तवाभिधानात् 'नामैकदेशे नामग्रहण'मिति न्यायात् तश्च वश्च तवौ तार्क्ष्यवासुकी तयोरभिधानं यस्मिन् पदे तस्मात् अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्जुनपराक्रमस्सन् सुदुस्सहादतिदुस्सहात् मन्त्रपदान्मन्त्रशब्दात् स्मारकाद्धेतोः आखण्डलसूनुरिन्द्रानुज उपेन्द्रो विष्णुरिति यावत्। नि। 'सूनुः पुत्रेऽनुजे रवा' विति विश्वः। तस्य विः पक्षी गरुड इत्यर्थः। तस्य क्रमः पादविक्षेपः सोऽनुस्मृतो येन स तथोक्तः स्मृतगरुडमहिमा उरग इव नताननस्सन् व्यथते दुःखायते । नि । 'पीडा बाधा व्यथा दुःख' मित्यमरः। अत्युत्कटभयरोषादिविकारा दूर्वारा इति भावः । श्लो । 'सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराजय' मिति न्याया 'त्पितृसमो ज्येष्ठ' इति न्यायाच्चार्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥ २४

तदाशु कर्तुं त्वयि जिह्ममुद्यते
　　विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां
　　प्रवृत्तिसाराः खलु मादृशां गिरः ॥ २५

इतीरयित्वा गिरमात्तसत्क्रिये
　　गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा
　　तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६

---

अव—निगमयति—

**तदिति ॥** तत्तस्मात्कारणात् त्वयि जिह्मं कपटं कर्तुमुद्यते त्वां जिघांसाविति भावः। तत्र तस्मिन् दुर्योधने विधेयं कर्तव्यमुत्तरं प्रतिक्रिया आशु शीघ्रं विधीयतां क्रियतां । ननु कर्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह—परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वतां संगृह्णतां मादृशां वार्ताहारिणामित्यर्थः। गिरः प्रवृत्तिसाराः वार्तामात्रसाराः खलु। नि। 'वार्ता-प्रवृत्तिर्वृत्तान्त' इत्यमरः। वार्तामात्रवादिनो वयं न तु कर्तव्यार्थोपदेशसमर्थाः अतस्त्वयैव निर्धार्य कार्यमिति भावः। सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः॥ २५

अव—ततो युधिष्ठिरेण किं कृतमित्यत्राह—

**इतीति ॥** वनसन्निवासिनां पत्यौ वनेचराधिपे इतीत्थं गिरं वाचमीरयित्वा उक्त्वा आत्तसत्क्रिये गृहीतपारितोषिके गते सति तुष्टिदानमेव चाराणां हि वेतनं ते हि तल्लोभात्स्वामिकार्येष्वतीव त्वरन्त इति नीतिवाक्यामृते । अथ महीभुजा राज्ञा कृष्णासदनं द्रौपदीभवनं प्रविश्यानुजस्य सन्निधौ तद्वनेचरोक्तं वचः वाक्यमाचचक्षे आख्यातं। अथवा कृष्णेति पदच्छेदः सदनं प्रविश्य अनुजसन्निधौ तद्वचः कृष्णा आचचक्षे आख्याता । चक्षिङोदुहादेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट् ॥ २६

निशम्य सिद्धिं द्विषतामपाकृती-

स्ततस्ततस्त्या विनियन्तुमक्षमा ।

नृपस्य मन्युव्यवसायदीपिनी-

रुदाजहार द्रुपदात्मजा गिरः ॥ २७

भवादृशेषु प्रमदाजनोदितं

भवत्यधिक्षेप इवानुशासनम् ।

तथापि वक्तुं व्यवसाययन्ति मां

निरस्तनारीसमया दुराधयः ॥ २८

---

अव—ततो द्रौपदी किमकार्षीदित्यत्राह—

**निशम्येति** ॥ ततो द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं वृद्धिरूपां निशम्य आकर्ण्य ततस्तदनन्तरं ततो द्विषद्भ्यः आगतास्ततस्त्याः 'अव्ययात्त्य'बिति त्यप्-अपाकृती रपकारान् केशापकर्षणादीन् विनियन्तुं निरोद्धुं अक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोः दीपिनीः संवर्धिनीः गिरो वाचः उदाजहार जगाद ॥ २७

अव—नृपमनुज्ञापयितुमाह—

**भवादृशेष्विति** ॥ भवादृशाः भवद्विधाः पण्डिता इत्यर्थः । तेषु विषये 'त्यदादिष्वि'त्यादिना कञ् । आ सर्वनाम्न इत्याकारादेशः प्रमदाजनोदितं स्त्रीजनोक्तं 'वदेः क्तः—वचिस्वपी'त्यादिना सम्प्रसारणं । अनुशासनं नियोगवचनमधिक्षेपः तिरस्कार इव भवति । अतो न युक्तं वक्तुमित्यर्थः । तथापि वक्तुमनुचितत्वेपि निरस्तनारीसमयास्त्याजितशालीनतारूपस्त्रीसमाचाराः । नि । 'समयाश्शपथाचारकालसिद्धान्तसंविद' इत्यमरः । दुराधयः समयोल्लङ्घनहेतुत्वाद्दुष्टा मनोव्यथाः । नि । 'पुंस्याधिर्मानसी व्यथे' त्यमरः ॥ मां वक्तुं व्यवसाययन्ति प्रेरयन्ति प्रोत्साहयन्तीत्यर्थः । न किञ्चिदयुक्तं दुःखिनामिति भावः ॥ २८

अखण्डमाखण्डलतुल्यधामभि-
श्चिरं धृता भूपतिभिस्स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्जिता ॥ २९

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा
नसंवृताङ्गान्निशिता इवेषवः ॥ ३०

---

अव—एवमनुज्ञाप्य किमुक्तं तयेत्यत्राह—

**अखण्डमिति ॥** आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावैः । नि । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयो' रिति हेमः । स्ववंशजैः भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नं धृता मही त्वया मदं च्योततीति मदच्युत् क्विप् तेन मदस्राविणा मतङ्गजेन स्रगिव आत्महस्तेन स्वकरेण स्वचापल्येनेत्यर्थः। अपवर्जिता परिहृता स्वदोषादेवायमनर्थागम इति भावः (कुलक्रमागता मही भवता अकारणमेव त्यक्ता अतस्त्वत्कृतो ह्ययमनर्थः यथा मत्तद्विपमालाविसर्जने पुनरादाने च स्वयमेव समर्थः तथा भवानपि उपेक्षया त्यक्तामपि महीं स्वीकर्तुं समर्थ इति निन्दास्तुत्या प्रोत्साहयतिस्म) २९

अव—स्वदोषादेवायमनर्थागम इत्युक्तं स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह—

**व्रजन्तीति ॥** मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति ये मायाविषु मायावत्सु विषये 'अस्मायामेधे'त्यादिना विनिप्रत्ययः । मायिनो मायावन्तः। 'व्रीह्यादिभ्यश्चे'तीनि प्रत्ययः। न भवन्ति अत्रैवार्थान्तरं न्यस्यति । प्रविश्येति शठाः गूढविप्रियकारिणो धूर्तास्तथाविधानकुटिलानसंवृताङ्गान् अवर्मितशरीरान् निशिता इषव इव प्रविश्य प्रवेशं कृत्वा आत्मीया भूत्वा घ्नन्ति हिंसन्ति हि। आर्जवं हि कुटिलेषु न नीतिरिति भावः ॥ ३०

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारये-
न्मनोरमामात्मवधूमिव श्रियम् ॥ ३१

भवन्तमेतर्हि मनस्विगर्हिते
विवर्तमानं नरदेववर्त्मनि ।

---

अव—न च लक्ष्मीचाञ्चल्यादयमनर्थागमः । स्वोपेक्षादोषमूलत्वादित्या-शयेनाह—

**गुणेति ॥** अनुरक्तसाधनोऽनुकूलसहायवान् । उक्तं च कामन्दकीये । श्लो । 'उद्योगादनिवृत्तस्य सुसहायस्य धीमतः । छायेवानुगता तस्य नित्यं श्रीस्सहचारिणी' ति । अनुरक्तशासन इति पाठे समस्तजनाभिलषितशिक्ष इत्यर्थः । कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च त्वदन्यस्त्वत्तोऽन्यः । 'अन्यारा' दित्यादिना पञ्चमी । क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्यादिभिश्च अनुरक्तां स्वानुरागिणीं कुलजां कुलक्रमादागतां कुलीनां च मनोरमां मनोहरां श्रियं सम्पदं आत्मवधूमिव स्वभार्यामिव । नि । 'वधूर्जाया स्नुषा स्त्रीचे' त्यमरः । परैश्शत्रुभिः अन्यैश्च अपहारयेत्स्वयमेवापहारं कारये-दित्यर्थः । कळत्रापहारवल्लक्ष्म्यपहारोपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः ॥ ३१

अव—अथ दशभिः कोपोद्दीपनं करोति—

**भवन्तमिति ॥** हे नरदेव नरेन्द्र एतर्हीदानीं अस्मिन्नापत्कालेपी-त्यर्थः । नि । 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथे' त्यमरः । 'इदमोर्हि-लि'ति र्हिल् प्रत्ययः । एते तौ रथोरित्येतादेशः । आपदमेवाह—मनस्विगर्हिते शूरजुगुप्सिते वर्त्मनि मार्गे विवर्तमानं शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः । भवन्तं त्वां उदीरितः उद्दीपितो मन्युः क्रोधः शुष्कं नीरसम् । 'शुषः क' इति निष्ठातकारस्य ककारादेशः । शमी चासौ तरुश्चेति विशेषणसमासः । तं शमीतरुं शमीग्रहणं शीघ्रज्वलनस्वभावात् कृतं उच्छिख उद्गतज्वालः । नि । 'घृणिज्वाले

कथं न मन्युर्ज्वलयत्युदीरित-
　　श्शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ ३२

अवन्ध्यकोपस्य निहन्तुरापदां
　　भवन्ति वश्यास्स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
　　न जातहार्देन च विद्विषादरः ॥ ३३

परिभ्रमन् लोहितचन्दनोचितः
　　पदातिरन्तर्गिरि रेणुरूषितः ।

---

अपि शिखे' इत्यमरः । अग्निः वह्निरिव कथं न ज्वलयति ज्वलयितुमुचित-मित्यर्थः । 'मितां ह्रस्वः' इति ह्रस्वः ॥ ३२

अव—नन्वनतश्शत्रुत्वादयं क्रोधस्त्याज्य एवेत्याशङ्क्याह—

**अवन्ध्येति ॥** अवन्ध्यः कोपो यस्य तस्य अवन्ध्यकोपस्य अत एव आपदां निहन्तुः निग्रहानुग्रहसमर्थस्येत्यर्थः । पुंस इति शेषः । देहिनो जन्तवः स्वयमेव वश्या वशं गता भवन्ति । 'वशं गत' इति यत्प्रत्ययः । अतः कोपिना भवितव्यमित्यर्थः । व्यतिरेके त्वनिष्टमाचष्टे अमर्षशून्येन निष्कोपेन जन्तुना कन्यया शोक इति वत् हेतौ तृतीया हृदयस्य कर्म हार्दं स्नेहः । नि । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेह' इत्यमरः । युवादित्वादण्प्रत्ययः । हृदयस्य हृल्लेख-यदण्लासेष्विति हृदादेशः जातहार्देन जातस्नेहेन सता जनस्यादरः प्रीतिर्नास्ति विद्विषा द्विषता च सता आदरो न अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्या-वित्यर्थः । अथ वा विद्विषा सता दरो भयं न । 'दरोऽस्त्रियां भये श्वभ्र' इत्यमरः । एतस्मिन्नेव प्रयोगे सन्धिवशाद्द्विधा पदच्छेदः । पुंवाक्येषु न दोषः अतस्स्थाने कोपः कार्यः त्याज्यस्त्वस्थाने कोप इति भावः ॥ ३३

**परिभ्रमन्निति ॥** लोहितचन्दनोचितः उचितलोहितचन्दनः आहि-ताग्न्यादित्वात् साधुः । अभ्यस्तरक्तचन्दन इत्यर्थः । नि । 'अभ्यस्तेप्युचितं न्याय्य' मिति यादवः । महारथो रथचारी उभयत्रापि प्रागिति शेषः । अद्य तु रेणुरूषितो धूलिच्छुरितः पद्भ्यामतति गच्छतीति पदातिः पादचारी । 'अज्यति-

महारथस्सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदरः ॥ ३४

विजित्य यः प्राज्यमयच्छदुत्तरान्
कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन्
करोति मन्युं न कथं धनञ्जयः ॥ ३५

---

भ्यां चेत्यनुवृत्तौ पादेचेत्यौणादिक इण्प्रत्ययः। पादस्य 'पदाज्यातिगोपहते'ष्विति पदादेशः। अन्तर्गिरि गिरिषु । 'अव्ययं विभक्तो'त्यादिना विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति विकल्पात्समासान्ताभावः । परिभ्रमन् सञ्चरन्नयं वृकोदरो भीमः सत्यधनस्येति सोल्लुण्ठनवचनं। अद्यापि सत्यमेव रक्ष्यते न तु भ्रातर इति भावः। तवेति शेषः। मानसं नो दुनोति कच्चिन्न परितापयति किम् । नि। 'कच्चित्कामप्रवेदन' इत्यमरः। स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४

अव—इत्येवं वृकोदरे दयोत्पादनेन रोषोद्दीपनमभिधाय धनञ्जयं प्रत्याह—

**विजित्येति ॥** उपमीयतेऽनयेत्युपमा । आतश्चोपसर्ग इत्यङ् । वासवः इन्द्रः उपमा यस्य स वासवोपमः इन्द्रतुल्यो यो धनञ्जयः। उत्तरान् कुरून्मेरोरुत्तरानमानुषान् देशविशेषान् विजित्य प्राज्यं प्रभूतम्। नि । 'प्रभूतं प्रचुरं प्राज्य' मित्यमरः। कुप्यादन्यदकुप्यं हेमरूपात्मकम् । नि। 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते। ताभ्यां यदन्यत्तत्कुप्य' मित्यमरः । वसु धनं अयच्छत् दत्तवान्। 'पाघ्रे'त्यादिना दाणो यच्छादेशः स धनञ्जयतीति धनञ्जयोऽर्जुनः । 'संज्ञायां भृतॄ वृजी'त्यादिना खच् प्रत्ययः । अरुर्द्विषदित्यादिना मुमागमः। अधुना अस्मिन् काले ‡ अधुनेति निपातनात्साधुः । तव वल्कवासांस्याहरन् सम्पादयन् कथं तव मन्युं क्रोधं दुःखं वा न करोति (अथवा वल्कवासांस्याहरन् धारयन् तव मन्युं कथं न करोति) धनञ्जयग्रहणं प्रावीण्यप्रकटनार्थम् ॥ ३५

---

‡ इदंशब्दादधुनाचेति सूत्रेणाधुनाप्रत्यये इदम इशितीशादेशे यस्येतिचेतीकारलोपे अधुनेति रूपमिति प्रक्रियालेखनं युक्तम् ॥

वनान्तशय्याकठिनीकृताकृती
  कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ
  विलोकयन्नुत्सहसे न बाधितुम् ॥ ३६

इमामहं वेद न तावकीं धियं
  विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां
  रुजन्ति चेतः प्रसभं ममाधयः ॥ ३७

---

अव—नकुलसहदेवौ प्रत्याह—

**वनान्तेति ॥** वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । नि । 'आकारो देह आकृति' रिति वैजयन्ती । विष्वक्समन्ततः । नि । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपी' त्यमरः । कचाचितौ कचव्याप्तौ विकीर्णकेशावित्यर्थः । अतएव अगजौ गिरिसम्भवौ गजाविव स्थितौ एतौ यमौ युग्मजातौ माद्रीपुत्रावित्यर्थः । नि । 'यमो दण्डधरे ध्वांक्षे संयमे यमजेपि चे'ति विश्वः । विलोकयंस्त्वं कथं धृतिसंयमौ सन्तोषनियमौ । नि । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टि' ष्विति विश्वः । बाधितुं नोत्सहसे न प्रवर्तसे । शकधृषेत्यादिना तुमुन् । अहो ते महद्धैर्यमिति सोल्लुण्ठनं वचनम् ॥

अव—अथ राज्ञो दुर्दशां दर्शयितु † मुपोद्घातमाह—

**इमामिति ॥** इमां वर्तमानां तवेमाम् । तावकीं त्वदीयाम् 'तस्येद'मित्यण् प्रत्ययः। तवकममकावेकवचन इति तवकादेशः । धियमापद्विषयां त्वच्चित्तवृत्तिं अहं न वेद कीदृशी वा न वेद्मि परबुद्धेरप्रत्यक्षत्वादिति भावः । 'विदो: लटो वे'ति णलादेशः । न चात्मदृष्टान्तेनापन्नत्वाद्दुखित्वमनुमातुं शक्यते धीरादिष्वनैकान्तिकत्वादित्याशयेनाह । चित्तवृत्तयः चित्तव्यापाराः विचित्ररूपाः धीराधीराद्यनेकप्रकाराः खलु । किन्तु परामुत्कृष्टां भवदापदं विचिन्तयन्त्याः भावयन्त्याः मम चेतश्चित्तं आधयो मनोव्यथाः 'उपसर्गे घोः कि'रिति कि

---

† प्रकृतार्थं वर्णयितुमर्थान्तरवर्णनमुपोद्घातः ॥

पुराधिरूढश्शयनं महाधनं
विबोध्यसे यस्स्तुतिगीतिमङ्गळैः ।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैश्शिवारुतैः ॥ ३८

पुरोपनीतं नृप रामणीयकं
द्विजातिशेषेण यदेतदन्धसा ।

---

प्रत्ययः । प्रसभं प्रसह्य रुजन्ति भञ्जन्ति । 'रुजो भङ्ग' इति धातोर्लट् । पश्यतामपि दुस्सहदुःखजननी त्वद्विपत्तिरनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः। चेत इति । रुजार्थानां भाववचनानामज्वरेरिति षष्ठी न भवति तत्र शेषाधिकाराच्छेषत्वस्याविवक्षितत्वादिति ॥ ३७

अव—तदापदमेव श्लोकत्रयेणाह—

**पुरेति ॥** यस्त्वं महाधनं बहुमूल्यं श्रेष्ठमित्यर्थः । नि । 'महाधनं महामूल्य' इति विश्वः । शयनं शय्यामधिरूढस्सन् स्तुतिः गुणोत्कर्षकथनं। गीतिः गानं मङ्गळं च इष्टदेवतादेशवचनं । तेषां द्वन्द्वः । तैः । यद्वा स्तुतयो गीतयश्च ता एव मङ्गळानि तैः करणभूतैः पुरा विबोध्यसे वैतालिकैरिति शेषः । पूर्वं विबोधित इत्यर्थः । 'पुरि लुङ्चास्मे' इति भूतार्थे लट् । स त्वं अदभ्रदर्भां बहुळकुशां । नि । 'अदभ्रं बहुळं बहु' इति । 'अस्त्री कुशं कुथो दर्भ' इति चामरः । स्थलीमकृत्रिमभूमिं 'जानपदे' त्यादिना अकृत्रिमार्थे ङीष् । एतेन दुस्सहस्पर्शत्वमुक्तं । अधिशय्य शयित्वा 'अधि शीङ्स्थासां कर्मे'ति कर्मत्वं अयङ्यिक्ङितीत्ययङादेशः । अशिवैरमङ्गळैः शिवारुतैः । क्रोष्टुवाशितैः । नि । 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्युभे' इति वैजयन्ती । निद्रां जहासि अद्येति शेषः ॥ ३८

**पुरेति ॥** हे नृप यदेतत्पुरोवर्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेन अन्धसा अन्नेन । नि । 'भिस्साछी भक्तमन्धोऽन्न' मित्यमरः । द्वे जाती जन्मनी येषां ते द्विजातयः तदुक्तं । श्लो । 'जन्मना जायते शूद्रस्संस्कारैर्द्विज उच्यत' इति । 'दन्तविप्राण्डजाद्विजा' इत्यमरः । रमणीयस्य भावो

तदद्य ते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः ॥ ३९

अनारतं यौ मणिपीठशायिना-
वरञ्जयद्राजशिरस्स्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु बर्हिषाम् ॥ ४०

द्विषन्निमित्ता यदियं दशा तत-
स्समूलमुन्मूलयतीव मे मनः ।

---

रामणीयकं मनोहरत्वमुपनीतं प्रापितं । नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणा' मिति वचनात् । अद्य वन्यफलाशिनस्ते तव तद्वपुः यशसा समं परमतिमात्रं कार्श्यं परैति प्राप्नोति । उभयमपि क्षीयत इत्यर्थः । अत्र सहोक्तिरलङ्कारः तदुक्तं काव्यप्रकाशे । श्लो । 'सा सहोक्तिस्सहार्थस्य बलादेकं द्विवाचक' मिति ॥ ३९

**अनारतमिति ॥** अनारतमजस्रं मणिपीठशायिनौ मणिमयपीठस्थायिनौ यौ चरणौ राजशिरस्स्रजां नमद्भूपालमौलिस्रजां रजः परागा अरञ्जयत् तौ ते चरणौ मृगैर्द्विजैः तपस्विभिश्च आलूनशिखेषु छिन्नाग्रेषु यद्वा मृगाणां द्विजैर्दन्तैः आलूनशिखेषु बर्हिषां कुशानां । नि । 'बर्हिः कुशहुताशयो'रिति विश्वः । वनेषु निषीदतः तिष्ठतः ॥ ४०

अव—ननु सर्वप्राणिसाधारण्यामापदि का परिदेवनेत्यत्राह—

**द्विष इति ॥** यद्यतः कारणादियं दशा ईदृश्यवस्था । नि । 'दशावर्ताववस्थाया' मिति विश्वः । द्विषन्तो निमित्तं यस्यास्सा द्विषन्निमित्ताः शत्रुकृतेत्यर्थः । द्विषोऽमित्रे इति शतृप्रत्ययः । ततस्तस्मान्मे मनः समूलं निश्शेष-

परैरपर्यासितवीर्यसम्पदां

पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१

विहाय शान्तिं नृप धाम तत्पुनः

प्रसीद सन्धेहि वधाय विद्विषाम् ।

व्रजन्ति शत्रूनवधूय निस्पृहा

श्शमेन सिद्धिं मुनयो न भूभृतः ॥ ४२

पुरस्सरा धामवतां यशोधना-

स्सुदुस्सहं प्राप्य निकारमीदृशम् ।

---

मुन्मूलयतीवोत्पाटयतीव दैविकीत्वापन्नदुःखायेत्याह परैरिति । परैः शत्रुभि-रपर्यासिता अपर्यावर्तिता अध्वंसिता वीर्यसम्पद्येषां तेषां मानिनां पराभवो विपदपि उत्सव एव आनन्द एवेति वैधर्म्येणार्थान्तरन्यासः । मानहानिर्दुस्सहा न त्वापदिति भावः । यद्वा किं भवत्या एव अस्माकमपि तुल्यमेवेत्यत्राह (परैरिति । परैरपर्यासितवीर्यसम्पदां मानिनां भवतां पराभवोऽप्युत्सव एवेत्यात्मक्लेशं प्रकटयति पराभवमुखेन) ४१

अव—तर्हि किं कार्यमित्यत आह—

**विहायेति** ॥ हेनृप शान्तिं शमं विहाय तत्प्रसिद्धं धाम तेजः विद्विषां वधाय पुनस्सन्धेहि अङ्गीकुरु । प्रसीद प्रसन्नो भव । प्रार्थनायां लोट् । ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्यत्राह । व्रजन्तीति । निस्पृहाः निरीप्साः मुनयः शत्रून् अवधूय निर्जित्य शमेन क्रोधवर्जनेन सिद्धिं अभीष्टसिद्धिं मोक्षाख्यां व्रजन्ति । भूभृतस्तु न व्रजन्ति कैवल्यकार्यवद्राजकार्यं न शान्तिसाध्यमित्यर्थः ॥

अव—नृपधामैव नास्तीत्याशङ्क्य सत्तां प्रकटयितुमाह—

**पुरस्सरा इति** ॥ किञ्च धामवतां तेजस्विनां मानवतामिति पाठे अहङ्कारिणां परनिकारासहिष्णूनामित्यर्थः । पुरस्सरन्तीति पुरस्सराः अग्रेसराः 'पुरोग्रतोग्रेषु सर्तेरिति टप्रत्ययः । यशोधनाः भवादृशाः सुदुस्सहमतिदुस्सह-

भवादृशाश्चेदधिकुर्वते रतिं
निराश्रया हन्त हता मनस्विता ॥ ४३

अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
जटाधरस्सन् जुहुधीह पावकम् ॥ ४४

न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः ।

---

मीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषमधिकुर्वते स्वीकुर्वते चेत्तर्हि । हन्त इति खेदे । मनस्विता अभिमानिता निराश्रया सती हता नष्टा । तेजस्वि-जनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्यासङ्गतेरधिपूर्वात्करोतेरधेः प्रसहने इत्यात्मनेपदं न भवति । प्रसहनं परिभव इति काशिका । तथाप्यस्या कर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभि-प्राये स्वरितजित इत्यात्मनेपदं सिद्धम् ॥ ४३

अव—सत्यपि तस्मिन् धामनि न तव रुचिरित्यत्राह—

**अथेति** ॥ अथ पक्षान्तरे निरस्तविक्रमस्सन् चिराय चिरकालेनापि क्षमां क्षान्तिमेव । नि । 'क्षितिक्षान्त्योः क्षमे' त्यमरः । सुखस्य साधनं पर्येषि अवगच्छसि निश्चिनोषीत्यर्थः । तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय धरतीति धरः । पचाद्यच् । जटानां धरो जटाधरो जटिलस्सन् इह वने पावकं जुहुधि पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनु-षेत्यर्थः । 'हुझल्भ्योहेर्धि'रिति धिरादेशः ॥ ४४

अव—अथ समयोल्लङ्घनाद्बिभेषि तदपि न किञ्चिदित्याह—

**न समयेति** ॥ परेषु शत्रुषु निकृतिः शाठ्यं परं प्रधानं येषु तेषु तथोक्तेषु अपकारतत्परेषु सत्सु भूरिधाम्नः महौजसः प्रतीकारक्षमस्येत्यर्थः । ते तव समयः त्रयोदशसंवत्सरान् वने वत्स्यामीत्येवं रूपा संवित् । नि । 'समया-श्शपथाचारकालसिद्धान्तसंविद' इत्यमरः । तस्य परिरक्षणं प्रतीक्षणं न क्षमं न

अरिपु हि विजयार्थिनः क्षितीशा
  विदधति सोपधि सन्धिदूषणानि ॥ ४५

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
  शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
  दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ ४६

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
लक्ष्मीपदलाञ्छने प्रथमस्सर्गः ॥

---

युक्तम् । नि । 'युक्ते क्षमं शक्ते हिते त्रिष्वि'त्यमरः । हि यस्मात् विजयार्थिनो विजिगीषवः क्षितीशाः अरिपु विषये सोपधि सकपटं यथा तथा नि । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतव' इत्यमरः । सन्धिदूषणानि विदधति । केनचिद्व्याजेन दोषमापाद्य सन्धिं विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोस्सर्वथा कार्यसाधनं प्रधानं । अन्यत्समयपरिरक्षणादिकमशक्तस्येति भावः । अर्थान्तरन्यासोलङ्कारः । पुष्पिताग्रावृत्तम् । तल्लक्षणं तु । श्लो ॥ 'अयुजिनयुगरेफतोयकारो युजिचनजौ जरगाश्च पुष्पिताग्रे'ति ॥ ४५

अव—उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति—

**विधीति ॥** विधिर्दैवं । नि । 'विधिर्विधाने दैवे चे'त्यमरः । समयः कालः तयोर्नियोगान्नियमनाद्धेतोः । तयोर्दुरतिक्रमत्वादिति भावः । यद्वा विधेस्समयः कालः तस्य नियोगात्सम्बन्धात् अगाधे दुस्तरे आपत्पयोधिरिवेत्युपमितसमासः । दिनकृतमिवेति वक्ष्यमाणानुसारात् तस्मिन् आपत्पयोधौ मग्नं सूर्योऽपि सायं सागरे मज्जति अपरेद्युरुन्मज्जति चेत्यागमः । दीप्तिः प्रतापः आतपश्च तस्यास्संहारेण सङ्कोचेन जिह्ममप्रसन्नं शिथिलवसुं शिथिलधनं अन्यत्र शिथिलरश्मिं । नि । 'वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणा' विति वैजयन्ती । शिथिलबलमिति पाठे तु उभयत्रापि शिथिलशक्तिकमित्यर्थः । शिथिलवशमिति पाठे वश अभिप्रायः । तथा लोके प्रयोगः । तद्वशे देवदत्तो वर्तत इत्यादिः शिथिलदशमिति पाठे दशा अवस्था रिपुस्तिमिरमिव रिपुतिमिरं उदस्य निरस्य उदीयमानमुद्यन्तं 'ईङ् गता'विति धातोर्दैवादिकात्कर्तरि शानच् । त्वां दिनादौ दिनकृत-

मिव लक्ष्मीः भूयस्समभ्येतु भजतु 'आशिषि लिङ्लोटा'विति लोट्। चमत्कारकारितया मङ्गळाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः। यथाह भगवान् भाष्यकारः। 'मङ्गळादीनि मङ्गळमध्यानि मङ्गळान्तानि च शास्त्राणि प्रथन्ते। वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति। अध्येतारश्च प्रवक्तारो भवन्ती'ति। पूर्णोपमेयं। मालिनीवृत्तं। तल्लक्षणन्तु॥ श्लो। 'न नमयययुतेयं मालिनी भोगिलोकै' रिति। सर्गान्तत्वाद्वृत्तभेदः। यथाह दण्डी। श्लो। 'सर्गैरनतिविस्तीर्णैश्श्रव्यवृत्तैस्सुसन्धिभिः। सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जक' मिति। अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति। इतीति। इति शब्दः परिसमाप्तौ। भारविकृताविति कविनामकथनं। महाकाव्य इति महच्छब्देन लक्षणसम्पत्तिस्सूचिता। किरातार्जुनीय इति काव्यवर्णनीययोः कथनं। प्रथमस्सर्गः समाप्तइति शेषः। एवमुत्तरत्रापि द्रष्टव्यं। किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयः। 'शिशुक्रन्द' इत्यादिना द्वन्द्वाच्छप्रत्ययः। राघवपाण्डवीयमिति वत्। तथाप्यर्जुनएवात्र नायकः किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः। यथाह दण्डी। श्लो। 'वंशवीर्यप्रतापादीन् वर्णयित्वा रिपोरपि। तज्जयान्नायकोत्कर्षकथनं च धिनोति न' इति। अथायं संग्रहश्लोकः 'नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजस्तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः। श्रृङ्गारादिरसोऽङ्ग मत्र विजयी वीरः प्रधानो रसश्शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फल' मिति॥ ४६

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायां प्रथमस्सर्गः॥

---

## ॥ द्वितीयस्सर्गः ॥

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १

यदवोचदवेक्ष्य मानिनी परितस्स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ २

---

अव—इतीत्थं नीतिमार्गदर्शने कृते सति किं जातमित्यत्राह—

**विहितामिति ॥** अथ वृकोदरो भीमः प्रियया द्रौपद्या प्रियाग्रहणमस्या हितोपदेशतात्पर्यसूचनार्थं विहितां अभिहितामित्यर्थः । विपूर्वस्य दधातेः क्रियासामान्यवाचिनो योग्यविशेषपर्यवसानात् मनःप्रियामभिमतार्थयोगान्मनोहरां विशेषणद्वयेनापि गिरो ग्राह्यत्वमुक्तं । गिरं गरीयसीं सारवत्तरां निश्चित्य नृपं युधिष्ठिरं उपपत्तिमत् युक्तियुक्तं ऊर्जिताश्रयमुदारार्थं वचनम् । ऊचे उक्तवान् । कर्तरि लिट् ब्रुवो वचिरादेशः 'ब्रुविशासी'त्यादिना द्विकर्मकत्वं । अकथितं चेति नृपस्य कर्मत्वं । अस्मिन् सर्गे वियोगिनीवृत्तं । तल्लक्षणं तु । श्लो। 'विषमे ससजागुरुस्समे नभरालोथ गुरुर्वियोगिनी' ति ॥ १

अव—किं तद्वचनं तदाह—

**यदिति ॥** मानिनी क्षत्रकुलाभिमानवती द्रौपदी स्नेहमयेन स्नेहप्रचुरेण 'तत्प्रकृतवचने मयट्' । चक्षुषा ज्ञानचक्षुषा एतेनाप्तत्वमुक्तं परितोऽवेक्ष्य सर्वतो विविच्य यद्वचनमवोचत् ब्रुवो वचेर्वा लुङ् 'वच उ'मि त्युमागमः । वागधिपस्य बृहस्पतेरपि दुर्वचं वक्तुमशक्यं । शेषे षष्ठीयं । नकृद्योगलक्षणा । अतो नलोकेत्यादिना षष्ठीप्रतिषेधो नास्ति । तद्वचनं विस्मयं विदधीत सर्वस्यापीति शेषः । अथवा वागधिपस्यापि विस्मयं विदधीतेति सम्बन्धः । दुर्वचं केनापीति शेषः यः स्त्रैणमपि शास्त्रमनुरुणद्धि हितं चानुबध्नाति अतो विस्मयकरं ग्राह्यं चैतद्वचनमिति तात्पर्यार्थः ॥ २

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभस्सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३

परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ ४

---

अव—विस्मयकरत्वे हेतुमाह—

**विषम इति ॥** विषमोऽपि दुर्बोधोऽपि अन्यत्र दुष्प्रवेशोऽपि नयो नीतिशास्त्रं पयसामाशयो ह्रद इव कृततीर्थः कृताभ्यासाद्युपायस्सन् । नि 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रि' ष्विति विश्वः । अन्यत्र कृतजलावतारस्सन् । नि । 'योनौ बलावतारे च तीर्थ' मिति हलायुधः । विगाह्यते । गृह्यते प्रविश्यते च किन्तु तत्र नये जलाशये च स तादृशः पुरुषः विशेष दुर्लभः अत्यन्तदुर्लभः यः कृत्यं सन्धिविग्रहादिकार्यं स्नानादिकं च । तस्य । वर्त्मसत्साधु देशकालाद्यविरुद्धं यथातथेत्यर्थः । अन्यत्र गर्तग्राहपाषाणादिरहितं यथा तथा उपन्यस्यति उदाहरति । नि । 'उपन्यासस्तु वाङ्मुखं' 'उपोद्घात उदाहर' इत्यमरः । यथा केनचित् कृततीर्थे पयसि गम्भीरेपि प्रवेष्टारस्सन्ति तीर्थकरस्तु विरळः तद्वन्नीतावपि निगूढमपि तत्त्वं सति वक्तरि बोद्धारस्सन्ति वक्ता तु न सुलभः अत इयं द्रौपदी अपठितापि साधु वक्तीति युज्यते विस्मयः इति तात्पर्यार्थः ॥ ३

अव—अथ ग्राह्यत्वे हेतुमाह—

**परिणामेति ॥** परिणामः फलकालः अन्यत्र परिपाकावस्था च । तत्र सुखे हिते-नि । 'शस्तं चाथ त्रिषु द्रव्ये पापपुण्यसुखादिचे'ति सुखशब्दस्य विशेष्यलिङ्गत्वं गरीयसि गुर्वर्थप्रतिपादके अर्थभूयिष्ठे श्रेष्ठे च क्षतौजसां उभयत्रापि क्षीणशक्तीनां । व्यथके युद्धोपोद्बलकत्वाद्भयङ्करे अन्यत्रादौ सन्तापादि-दुःखजनके । अल्पीयसि अल्पाक्षरे अल्पमात्रे च उक्तं च । श्लो । 'स्वल्पा च मात्रा बहुळो गुणश्चे'ति । अस्मिन् वचसि द्रौपदीवाक्ये अतिवीर्यवति अत्यन्तसामर्थ्यवति भेषजे औषध इव । नि । 'भेषजौषधभैषज्यानी' त्यमरः । बहुरधिको गुणः । मानत्राणराज्यलाभादिः । अन्यत्रारोग्यबलपोषादिश्च दृश्यते । अतो ग्राह्यमस्या वचनमिति भावः ॥ ४

इयमिष्टगुणाय रोचतां रुचिरार्था भवतेपि भारती ।
ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः ॥ ५

चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति ॥ ६

विधुरं किमतः परं परैरवगीतां गमिते दशामिमां ।

---

अव—सत्यमेवं मह्यं न रोचते किं करोमीत्यत आह—

**इयमिति ॥** रुचिरार्था हितार्थसम्पन्नेति रुचिरहेतूक्तिः इयं भारती द्रौपदीवाक्यं इष्टगुणाय अभिमतगुणाय गुणग्राहिणे इत्यर्थः । भवते तुभ्यमपि ॥ 'रुच्यर्थानां प्रीयमाण' इति सम्प्रदानत्वाच्चतुर्थी । रोचतां स्वदतां भवतापि स्वीक्रियतामित्यर्थः । विध्यर्थे लोट् । हितवचने बलादपीच्छां कुर्यादौषधवदिति भावः । तथापि स्त्रैणे वचसि का श्रद्धा तत्राह—नन्विति । गुणानां गृह्या गुणगृह्याः गुणपक्षपातिन इत्यर्थः । 'पदा स्वैरिबाह्यापक्षेषु चे'ति ग्रहेः क्यप् । विपश्चितो विद्वांसः । नि । 'विद्वान्विपश्चिद्दोषज्ञ' इत्यमरः । वचने विषये वक्तृविशेषे स्त्रीपुंसादिलक्षणे निस्पृहा ननु निराशाः खलु अर्थप्रकर्षमेव कांक्षन्ति न वक्तृप्रकर्षं । 'बालादपि सुभाषित' मिति वचनादिति भावः ॥ ५

अव—सम्प्रति स्वयमुपालभते—

**चतसृष्विति ॥** हे नृप चतसृष्वपि विद्यासु आन्वीक्षक्यादिषु यद्वा नृपाणां विद्याः नृपविद्याः । श्लो । 'आन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च शाश्वती, विद्याह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः' । इति कामन्दकः । निरूढिमागता प्रसिद्धिं गता अतएव विवेकिनी सदसद्विवेकवती । यथाह मनुः । श्लो । 'आन्वीक्षक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ च वार्तायां दण्डनीत्यां नयानया' विति । ते मतिः कथं करिणी पङ्कमिव विपर्ययं वैपरीत्यं अविवेकित्वरूपमेत्य अवसीदति । नश्यति न युक्तमिदमिति भावः ॥ ६

अव—किं नश्छिन्नमिदानीं येनेत्थमुपालभस इत्यत्राह—

**विधुरमिति ॥** त्वयि परैश्शत्रुभिः इमामीदृशीं अवगीतां गर्हितां नि । 'अवगीतं तु निर्वादे मुहुर्दृष्टे च गर्हित' इति विश्वः । दशामवस्थां गमिते

अवसीदति यत्सुरैरपि त्वयि सम्भावितवृत्ति पौरुषम् ॥ ७

द्विषतामुदयस्सुमेधसा गुरुरस्वन्ततरस्सुमर्षणः ।

न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥ ८

अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।

क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ९

---

प्रापिते सति सुरैरपि सम्भावितवृत्ति बहूकृतप्रसारं अथवा निश्चितसद्भावं पौरुषं पुरुषकारः । 'युवादित्वादण्प्रत्ययः । अवसीदति नश्यतीति यत् अतः परं अतोऽन्यत् अधिकं वा किं विधुरं किं कष्टं न किञ्चिदित्यर्थः । नि । 'विधुरं प्रत्यवाये स्यात्कष्टविश्लिष्टयोरपी'ति वैजयन्ती । अस्तीति शेषः । अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति भाष्यकारः । भवन्तीति लटः पूर्वाचार्याणां संज्ञा । यत्पौरुषाधिकस्य दुर्दशा सा च शत्रुकृतेति महत्कष्टं । तच्च त्वदुपेक्षयेत्युपालभ्यस इत्यर्थः ॥ ७

अव—अथोपेक्षाकालत्वादियमुपेक्षेत्याशंक्य नायमुपेक्षाकाल इति वक्तुं तदेव तावच्छ्लोकद्वयेन विविनक्ति—

**द्विषतामिति ॥** भूतिमुदयमिच्छता शोभना मेधा यस्य तेन सुमेधसा सुधिया । नित्यमसिच् प्रजामेधयोरित्यसिच् गुरुर्महानपि अस्वन्ततरः अत्यन्तदुरन्तः क्षयोन्मुख इति यावत् । द्विषतामुदयः अभिवृद्धिः सुखेन मृष्यते क्षम्यत इति सुमर्षणः सुसह उपेक्ष्य इत्यर्थः । स्वन्तश्च दुर्मर्षण इति भावः । भाषायां शासीत्यादिना खलर्थे युच्प्रत्ययः । महानपि फलसम्पत्प्रवणः फलसिद्ध्युन्मुखः । प्रनिरन्तरित्यादिना णत्वं परिक्षयो न सुमर्षणः नोपेक्ष्य इत्यर्थः अन्यथा तूपेक्ष्य इति भावः ॥ न ह्युदय इत्येव प्रतीकार्यः न च क्षय इत्येवोपेक्ष्यः किं तु स्वन्तत्वास्वन्तत्वाभ्यामुभावपि प्रतीकार्यावुपेक्ष्यौ च भवत इत्यर्थः ॥ ८

अव—एवमुभयोर्मध्ये एकतरस्योदयक्षययोर्गतिमुक्त्वा इदानीं युगपत्परिक्षयागमे गतिमाह—

**अचिरेणेति ॥** कृतमनेनेति कृती कुशल इत्यर्थः । 'इष्टादिभ्य'श्चेति इनि प्रत्ययः । परस्य शत्रोः क्षययुक्तिं क्षययोगं अचिरेण आशु भाविनीं भूयसीं दुरन्तां च तथा आत्मनः क्षययुक्तिं विपरीतां चिरभाविनीं अल्पीयसीं च विगणय्य

अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ १०

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ११

---

विचार्य 'ल्यपि लघुपूर्वा'दित्ययादेशः उपेक्षते सन्धिविग्रहादिषु उदासीनो भवति' अन्यथा उक्तवैपरीत्ये । परस्य क्षययुक्तौ अल्पीयस्यां स्वस्य भूयस्यां च सत्यामित्यर्थः । तत्प्रतीकारं तस्याः क्षययुक्तेः प्रतीकारं अचिरेण आशु कुरुते एवं सति यदा शत्रोरभ्युदयः स्वस्य चाति परिक्षयः । यथास्माकं । तदा किं वक्तव्यमित्यर्थः सद्यः प्रतिकुरुत इत्यर्थात्सिद्धमित्यनुसन्धेयम् ॥ ९

अव—तथाप्युपेक्षयामनिष्टमाचष्टे—

**अनुपालयतामिति ॥** उदेष्यतीं वर्धिष्यमाणां उदयोन्मुखीमित्यर्थः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । द्विषतां प्रभुशक्तिं प्रभुत्वाभिवृद्धिं कोशदण्डजं तेजः । नि । 'सप्रतापः प्रभावश्च यत्तेजः कोशदण्डज' मित्यमरः । अनीहया अनुत्साहेन अनुपालयतामुपेक्षमाणानां महीभुजां राज्ञां श्रियः सम्पदो । जननिर्वादभयात् निकृष्टपुरुषानुरागसम्प्राप्तलोकापवादभयादिवेति हेतूत्प्रेक्षा । अचिरादपयान्ति अपसरन्ति । यथाह कामन्दकः । श्लो । 'स्त्रीभिष्षण्ड इव श्रीभिरलसः परिभूयत' इति अतः पराक्रमितव्यमिति भावः ॥ १०

अव—ननु परिक्षीणः कथं प्रबलेनाभियुञ्जीतेत्यत्राह—

**क्षयेति ॥** क्षययुक्तमपि तथा क्षीणमपि सन्तं स्वभावजं सहजं शिवं सर्वलोकाह्लादकं धाम क्षात्रं तेजः प्रकाशं च दधतं बिभ्रतं समृद्धये अभिवृद्ध्यर्थं उत्थितमुद्युक्तं उत्सहमानमिति यावत् । अन्यत्र उत्थितमुदितं । अतएव अनपायमविनाशिनं वर्धिष्णुमित्यर्थः । नृपं प्रजाः प्रतिपच्चन्द्रं द्वितीयाचन्द्रमिवेत्यर्थः । प्रतिपच्छब्देन द्वितीया गृह्यते प्रतिपदि तस्यादृश्यत्वादिति । प्रणमन्ति प्रह्वीभावेन वर्तन्त इत्यर्थः । चन्द्रपक्षे तु नमस्कुर्वन्ति । क्षीणस्याप्युत्साहः कार्यसिद्धेर्निदानमित्यर्थः । श्लो । 'जयं हि सततोत्साही दुर्बलोपि समश्नुत' इति कामन्दकः ॥ ११

प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयोनयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १२

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥ १३

---

अव—ननु प्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यत इत्यत्राह—

**प्रभव इति ॥** कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः । कार्यसिद्धिश्चेति पञ्चाङ्गानि यथाह कामन्दकः । श्लो । 'सहायास्साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारसिद्धिः पञ्चाङ्गमिष्यत' इति पञ्चानामङ्गानां विनिर्णयः पञ्चाङ्गविनिर्णयः । 'तद्धितार्थे'त्यादिना उत्तरपदसमासः कृतः पञ्चाङ्गविनिर्णयो यस्य स तथोक्तः । नयो नीतिर्मन्त्र इति यावत् । कोशः अर्थराशिः । नि । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययो' रित्यमरः । दण्डश्च तुरङ्गसैन्यम् । नि । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे । यात्राज्ञायां सैन्यभेदे' इति वैजयन्ती । तयोः कोशदण्डयोः प्रभुशक्तेरित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । ऋदोरप् । स नयो नीतिः विधेयपदेषु कार्यवस्तुषु । नि । 'पदं व्यवसितत्राण स्थानलक्ष्मांघ्रिवस्तुष्वि' त्यमरः । दक्षतां क्षिप्रकारित्वमुत्साहमित्यर्थः । लोकः कृष्यादिप्रवृत्तो जनः नियतिं दैवमिव । नि । 'नियतिर्नियमे दैव'मिति विश्वः । अनुरुध्यते अनुसरति । रुधेर्दैवादिकात् कर्तरि लट् । मन्त्रस्यापि मूलमुत्साहः तन्मूलायाः प्रभुशक्तेर्मूलमिति किमु वक्तव्यं । अतस्स एवाश्रयणीयः यतो नक्तं दिवं मन्त्रयमाणस्यापि प्रभोर्निरुत्साहस्य न किञ्चित्सिध्यतीति ॥ १२

अव—ननु सोत्साहस्याप्यसहायस्य कथमर्थसिद्धिरित्यत आह—

**अभिमानवत इति ॥** अभिमानवतः मानधनस्य प्रियमिष्टं उच्चैरुन्नतं पदं स्थानं राज्यादिकमारुरुक्षतः आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्य आत्मपौरुषं स्वपुरुषकार एव विनिपातनिवर्तनक्षमं अनर्थप्रतीकारसमर्थं आलम्बनं सहकारि मतं इष्टं यथा कस्यचित्तुङ्गमारुरोहतः किञ्चित्पतनप्रतिबन्धकमनुचरहस्तादिकमालम्बनं तद्वदिति ध्वनिः । किं पौरुषादन्यैस्सहायैश्शूराणामिति भावः ॥ १३

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १४

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥ १५

अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।

---

अव—पौरुषानङ्गीकारे दोषमाह—

**विपद् इति ॥** अविक्रमं पौरुषहीनं। विपदः अभिभवन्ति तिरस्कुर्वन्ति आपदुपेतं विपन्नं आयतिः उत्तरकालः। नि। 'उत्तरः काल आयति' रित्यमरः। रहयति त्यजति निरायतेरायतिरहितस्य आसन्नक्षयस्येत्यर्थः। लघुता अगौरवं नियता अवश्यंभाविनी न कश्चिदेनमाद्रियत इत्यर्थः। अगरीयान् लघीयान् नृपश्रियः राजलक्ष्म्याः पदमास्पदं न भवति यद्वा नृपेति पदच्छेदः तस्मात् पौरुषं कर्तव्यमेवेत्यर्थः। अत्र पूर्वपूर्वस्य अविक्रमत्वादेरुत्तरोत्तरं विपदादिकं प्रति कारणत्वात्कारणमालाख्योऽलङ्कारः। तथा च सूत्रं 'पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाले'ति ॥ १४

अव—फलितमाह—

**तदिति ॥** तत्तस्मादुपेक्षायां दोषसम्भवादित्यर्थः। उन्नतेरभ्युदयस्य प्रतिपक्षमन्तरायं व्यवसायवन्ध्यतां उद्योगशून्यतां अवलम्ब्य अलं उद्योगशून्यतावलम्बनेनालमित्यर्थः। अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वेति क्त्वाप्रत्ययः। तस्य ल्यबादेशः। तथाहि पराक्रमः आश्रयः कारणं यासां तास्तथोक्तास्समृद्धयस्सम्पदः विषादेन समं अनुत्साहेन सह न निवसन्ति पौरुषसाध्यास्सम्पदो नानुत्साहसाध्याः उभयोस्सहावस्थानविरोधादित्यर्थः। वैधर्म्येण कार्यकारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १५

अव—ननु समयः प्रतीक्ष्यते किं वेगेनेत्यत्राह—

**अथेति ॥** अथावधिः कालः प्रतीक्ष्यते चेत्। नि। 'अवधिस्त्ववधाने स्यात्सीम्नि काले खलेऽपि चे'ति विश्वः। आविष्कृतजिह्मवृत्तिना प्रकटीकृतकपट-

धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसम्पदः ॥ १६

द्विषता विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः ।

---

व्यवहारेण धृतराष्ट्रसुतेन दुर्योधनेन नरेन्द्रसम्पदो राजसम्पदः । नरेन्द्रेति वा पदच्छेदः । चिरं चतुर्दशवर्षाणि आस्वाद्य अनुभूय कथं सुत्यजाः ज्ञातास्वादेन तेन पश्चादपि सम्पदो युद्धक्लेशं विना न त्यक्ष्यन्त एवेत्यवधिप्रतीक्षणं व्यर्थमित्यर्थः ॥

अव—अथ यदि दैववशात् स्वयमेव दुर्योधनस्सम्पदो दास्यति तथापि तत्कथं रोचयेमहीत्याह—

**द्विषतेति ॥** अथवा द्विषता दुर्योधनेन विहितं प्रत्यर्पितमित्यर्थः । आत्मनः पदं राज्यं पुनरपि त्वया लब्धा लप्स्यते यदि लभेः कर्मणि लुट् । हे जननाथ तवानुजन्मनां अनुजानां आविष्कृतपौरुषैः प्रकटितपराक्रमैः भुजैः कृतं अलं अस्मद्भुजैर्न किञ्चित्साध्यमित्यर्थः । राज्यदानादानयोर्द्विषतामेव स्वातन्त्र्ये अस्मद्भुजनैष्फल्यात् क्षत्रियस्य विजितमिति शास्त्रात् क्षात्रेणैव राज्यं ग्राह्यमिति भावः । कृतमिति प्रतिषेधार्थमव्ययं चादिषु पठ्यते । कृतमिति निवारणनिषेधयोरिति गणव्याख्याने । भुजैरिति गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया उक्तं च न्यासोद्योते 'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य । अपि तु गम्यमाना'पीति ॥ १७

अव—ननु साम्नैव कार्यसिद्धौ किं क्षात्रेण यथाह मनुः ॥ श्लो ॥ 'साम्ना दानेन भेदेन समस्तैरथवा पृथक् । विजेतुं प्रयतेतारीन्न युद्धेन कदाचने'ति तत्किमाग्रहेणेत्याशङ्क्याह—

**मदेति ॥** मृगाधिपः सिंहः मदसिक्तमुखैः मदवर्षिभिरित्यर्थः । स्वयं स्वेनैव हतैः करिभिर्गजैर्वर्तयते वृत्तिं करोति तैरेव जीवतीत्यर्थः । चौरादिकाद्वृतेर्लट् । भौवादिकस्य तु अणावकर्मकाच्चित्तवत्कर्तृकादिति परस्मैपदनियमादिति तथा हि तेजसा प्रभावेण । नि । 'तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसी'ति

लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८

अभिमानधनस्य गत्वरैरसुभिस्स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।

---

वैजयन्ती । जगत् लघयन् लघूकुर्वन् महान् तेजस्वी । महापुरुषः अन्यतोऽन्यस्मात्पुरुषात् भूतिं वृद्धिं नेच्छति खलु न हि तेजस्विनः परायत्तवृत्तित्वं युक्तमनुवचनं तु अशूरविषयमित्यभिप्रायः । विशेषेण सामान्यसमर्थनरूपोऽ र्थान्तरन्यासः ॥ १८

अव—ननु युद्धात्पाक्षिको लक्ष्मीलाभः उपायान्तरैस्तु न तथेत्याशङ्क्याह—

**अभिमानेति** ॥ अभिमानः वैरनिर्यातनमेव धनं यस्य वैरनिर्यातनमात्रनिष्ठस्येत्यर्थः । अतएव गत्वरैः गमनशीलैः अस्थिरैः । गत्वरश्चेति क्वरबन्तनिपातः । असुभिः प्राणैः करणैः । नि । 'पुंसि भूम्न्यसवः प्राणा' इत्यमरः । स्थास्नु स्थिरं ग्लाजिस्थश्च ग्स्नुप्रत्ययः । यशः चिचीषतः चेतुं सङ्ग्रहीतुमिच्छतः चिनोतेस्सन्नन्ताच्छतृप्रत्ययः । अचिरं अंशवो यस्यास्सा अचिरांशुर्विद्युत् तस्याः विलासः स्फुरणं तद्वच्चञ्चला । क्षणिकेत्यर्थः । लक्ष्मीस्सम्पत् अनुषङ्गादागतं *आनुषङ्गिकं अन्वाचयशिष्टं फलं ननु अधिकं प्रयोजनं किल मानत्राणजं यश एव मुख्यं फलम् । अभ्युच्चयस्तु लक्ष्मीरिति मानिनां मानएव श्लाघ्य इत्यर्थः । अत्रास्थिरप्राणत्यागेन स्थिरयशस्स्वीकाराभिधानात् न्यूनेनाधिकविनिमयाख्यः परिवृत्त्यलङ्कारः । उक्तं च काव्यप्रकाशे । श्लो । 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमै'रिति ॥ १९

अव—नन्वल्पस्य मानस्य हेतोः कथं प्राणत्यागश्शक्यते कर्तुं । यतो जीवन् नरो भद्रशतानि पश्येदित्याशङ्क्याह—

**ज्वलितमिति** ॥ जनो भस्मनां चयमास्कन्दति पादादिना आक्रामति अदाहकत्वादिति भावः । ज्वलितं ज्वलन्तं कर्तरि क्तः मतिबुद्धीत्यादि सूत्रे चकाराद्वर्तमानार्थत्वं । हिरण्यं रेतो यस्य तं हिरण्यरेतसं अग्निं नास्कन्दति दाह-

---

* अनुषङ्गः प्रयोजनमस्यानुषङ्गिकं प्रयोजनमिति ठञ् इति वक्तुं युक्तं तत आगत इत्यधिकारे ठक् ठञन्यतरविधायकप्रातिस्विकसूत्राभावात् ॥

अभिभूतिभयादसूनतस्सुखमुज्झन्ति न धाम मानिनः ॥ २०

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसस्सहते नान्यसमुन्नतिं यया ॥ २१

कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२

---

कत्वादिति भावः। अतो हेतोर्मानिनः अभिभूतिभयात्प्राणलोभेन तेजस्त्यागे परिभवो भविष्यतीति भयात् असूनेव सुखमक्लिष्टं उज्झन्ति त्यजन्ति धाम तेजस्तु नोज्झन्ति मानहानिकराज्जीवनात्स्वतेजसा मरणमेव वरमित्यर्थः। पूर्वतरश्लोकवदर्थान्तरन्यासोऽलङ्कारः॥ २०

अव—अथवा किमत्र प्रयोजनचिन्तया किन्तु तेजस्विनामेष स्वभाव एव यज्जिगीषुत्वमित्याह—

**किमिति ॥** मृगाधिपस्सिंहः। किं फलं प्रयोजनं अपेक्ष्य ध्वनतः गर्जतः धरन्तीति धराः पचाद्यच् पयसां धराः पयोधराः तान् मेघान् प्रार्थयते अभियाति। नि। 'याच्ञायामभिधाने च प्रार्थना कथ्यते बुधै'रिति केशवः। यद्वा अवरुणद्धीत्यर्थः। प्रा अर्थयते इति छेदः 'प्रा स्यात् याच्ञावरोधयो रि'त्यभिधानात्। प्रा अवरोधेन। प्रा इति तृतीयान्तं। अकारान्तस्य प्राशब्दस्य 'आतोधातो' रित्यत्र 'आत' इति योगविभागादकारलोपः। महीयसो महत्तरस्य सा प्रकृतिः खलु यया प्रकृत्या अन्यसमुन्नतिं परवृद्धिं न सहते महतः परभञ्जनमेव पुरुषार्थ इत्यर्थः। पूर्ववदलङ्कारः॥ २१

अव—उक्तं प्रयोजनं निगमयति उक्तार्थोपसंहरणं निगमः—

**कुर्विति ॥** हे नृप तत्तस्मात्। उक्तरीत्या पराक्रमावसरत्वाद्धेतोः। नि। 'यत्तद्यतस्ततो हेता' वित्यमरः। प्रमादजं अज्ञानजं तमो मोहं निर्धूय निरस्य विक्रमे पौरुष एव मतिं कुरु बुद्धिं विधेहि विक्रममेवांगीकुरु। न तूपायान्तरमित्यर्थः। न च विक्रमवैफल्यशङ्का कार्येत्याह—ध्रुवमिति। विद्विषां। शत्रूणां विपत्तयः आपदः त्वदनुत्साहहताः तव अनुत्साहेनाव्यवसायेन हताः प्रतिबद्धाः भवदनुद्योगध्वंसिता इत्यर्थः। अन्यथा प्रागेव विपद्येरन्निति भावः। इत्येतत् ध्रुवं निश्चितं अवेहि विद्धि। नि। 'ध्रुवं नित्ये निश्चिते चे'ति शाश्वतः॥ २२

द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कश्शतमन्युतेजसः ॥ २३

ज्वलतस्तव जातवेदसस्सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥ २४

इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसं ।

---

अव—न च नः पराजयशङ्का कार्येत्याह—

**द्विरदानिति ॥** दिग्विभावितान् दिक्षु प्रख्यातान् आयतः आगच्छतः आङ्पूर्वादिण्धातोश्शतृप्रत्ययः । चतुरो द्विरदान् दिग्गजानिव तथा उक्तविशेषणान् चतुरस्तोयनिधीनिव रणे आयतः दिग्विभावितान् शतमन्युतेजसः इन्द्रविक्रमान् चतुरस्तव अनुजान् द्विषतां मध्ये कः प्रसहेत सोढुं शक्नुयादित्यर्थः शकिलिङ्चेति शक्यार्थे लिङ् अतो निश्शङ्कं प्रवर्तस्वेति भावः ॥ २३

अव—आशीर्वादव्याजेन फलितमाह—

**ज्वलत इति ॥** तव चेतसि सततं सदा ज्वलतो दीप्यमानस्य वैरिकृतस्य रिपुनिमित्तकस्य । जातवेदसः क्रोधाग्नेरित्यर्थः । शिवेतरा अशिवा अमङ्गला वैधव्यदुःखजन्यत्वादिति भावः । रिपुनारीनयनाम्बुसन्ततिः वैरिवनिताश्रुप्रवाहः शमं शान्तिं विदधातु वैरिजनितस्य क्रोधस्य वैरिवधमन्तरेण शान्त्यसम्भवादवश्यं तद्वधस्त्वया कर्तव्य इति भावः । अत्र क्रोधस्य विषयस्य निगरणेन विषयिणो जातवेदस एवोपनिबन्धनातिशयोक्तिरलङ्कारः । तदुक्तम् । श्लो । 'विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिस्स्यात्कविप्रौढोक्तिजीविते' ति तत्रापि क्रोधस्य जातवेदसो भेदेऽप्यभेदाध्यवसायात् भेदे अभेदरूपा तत एवाम्बुनिर्वाप्यत्वोक्तिश्च घटते । तथाच यथाम्बुसेकेनाग्निस्सम्यक् शाम्यति तथा शत्रुवधेन क्रोध इत्यौपम्यं गम्यते ॥ २४

अव—युधिष्ठिर इत्थमाकर्ण्यकिमकार्षीदित्यत आह—

**इतीति ॥** इत्युक्तरीत्या दर्शिता प्रकटिता विक्रिया कोपविकारो वागारम्भात्मको येन तं कोपपरीतमानसं कोपाक्रान्तचित्तं इदं विशेषणद्वयं द्विरदेपि योज्यं । मरुतः वायोस्सुतं भीमं महीपतिर्युधिष्ठिरः दुष्टं द्विरदमिव । एतेनास्य

उपसांत्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २५

अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गळास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥ २६

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥ २७

---

भीमस्य शौर्यमेव न बुद्धिरस्तीति गम्यते उपसांत्वयितुं अनुनेतुं उपचक्रमे प्रवृत्तः । 'प्रापोभ्यां समर्थाभ्या'मित्यात्मनेपदं । राज्ञा भाव्युपकारविशेषापेक्षया कथञ्चिदवशो जनश्शनैश्शनैः द्विरदवद्वशीकरणीयो न तु त्याज्य इति भावः ॥ २५

अव—प्रथमं तावत् स्तुत्या त्रिभिः प्रसादयति—

**अपवर्जितेति ॥** विप्लवः प्रमाणबाधः अन्यत्र बाह्यमलसंक्रमः सोऽपवर्जितो यस्य तस्मिन् अपवर्जितविप्लवे त्यक्तव्यत्यासे त्यक्तकलङ्के चेत्यर्थः । शुचौ शुचिश्शब्दसौष्ठवं लोहशुद्धिश्च तद्वति अतएव हृदयग्राहिणि मनोहरे मङ्गळास्पदे एकत्र हितार्थप्रतिपादकत्वादन्यत्र मङ्गळवस्तुत्वाच्च श्रेयस्करे । श्लो । 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिं । गुरुमग्निं तथा सूर्यं प्रातः पश्येत्सदा बुध' इति पुराणवचनात् । तव गिरां विस्तरे वाक्प्रपञ्चे । 'प्रथनेवावशब्द' इति घञ्प्रतिषेधात् ऋदोरबित्यप् । अत एव । नि । 'विस्तारो विग्रहो व्यासस्सतु शब्दस्य विस्तर' इत्यमरः ॥ मतिस्त्वद्बुद्धिः आदर्शे दर्पण इव । नि । 'दर्पणे मुकुरादर्शा'वित्यमरः विमला विशदा अभिदृश्यते वाग्वैशद्यादेव मतिवैशद्यमनुमीयते तत्पूर्वकत्वात्तस्येत्यर्थः ॥ २६

अव—अथ युग्मेनाह—

**स्फुटतेति । उपपत्तिरिति च ॥** पदैः सुप्तिङन्तशब्दैः स्फुटता विशदार्थता नापाकृता न त्यक्ता अर्थस्य गौरवं भूयस्त्वं अर्थगौरवं च न न स्वीकृतं स्वीकृतमेवेत्यर्थः । वैशद्यप्रसक्तार्थगौरवाभावनिवर्तनार्थं नञ् द्वयं । सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधाविति वामनः । गिरां पदानां अवान्तरवाक्यानां च पृथगर्थता भिन्नार्थता अपुनरुक्तार्थतेति यावत् । रचिता कृता तथा क्वचिदपि सामर्थ्यं गिरामन्योन्यसाकांक्षत्वं च नापोहितं न वर्जितं । अन्यथा दशदाडिमादिशब्दवदेकवाक्यता न स्यात्. यथाहुः अर्थैकत्वादेकं वाक्यं सापेक्षं चेद्विभागे स्यादिति

उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥ २८

अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति ।
अवसाययितुं क्षमास्सुखं न विधेयेषु विशेषसम्पदः ॥ २९

---

नन्वर्थगौरवमित्यत्र कथं षष्ठीसमासः पूरणगुणेत्यादिना प्रतिषेधात् । नैष दोषः ये शुक्लादयश्शब्दाः गुणे गुणिनि च वर्तन्ते यथा पटस्य शुक्लः । शुक्लः पट इति च तेषामेवात्र निषेधात् ये पुनस्सदा गुणमात्रवचनाः यथा गौरवं प्राधान्यं रसो गन्धस्पर्श इत्येवमादयस्तेषामनिषेधात् तत्स्थैश्च गुणैः षष्ठी समस्यत' इति वचनाद्बहुळमभियुक्तप्रयोगदर्शनाच्च बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः अतएवाह वामनः । 'पत्रपीतिमादिषु गुणवचनेने'ति ॥ २७

**उपपत्तिरिति** ॥ किञ्च बलात् स्वबलमाश्रित्य । ल्यब्लोपे कर्मणि पञ्चमी । उपपत्तिर्युक्तिः उदाहृता पराक्रमपक्षएव श्रेयानिति युक्तिरुक्तेत्यर्थः । उचितं चैतन्महावीरस्येति भावः । तथा अनुमानेन युक्त्या आगमः शास्त्रं च न क्षतो न हतः न खण्डित इत्यर्थः । किं त्वागमाविरुद्धमेवोक्तं अन्यथा तद्विरोधादनुमानस्यैवाप्रामाण्यप्रसङ्गादिति भावः । ईदृगित्थं क्षात्रयुक्तमिदं वचनं अविद्यमान ईदृगाशयः इत्थं क्षात्रयुक्ताभिप्रायो यस्य सोऽनीदृगाशयः । नि । 'अभिप्रायश्छन्द आशय' इत्यमरः । कः प्रसभं हठात् वक्तुमुपक्रमेत न कोपीत्यर्थः । इत्थं वक्तुमुपक्रन्तैव नास्ति । वक्ता तु दूरापास्त इति भावः । केचिदेतच्छ्लोकत्रयं निन्दापरत्वेनापि योजयन्ति । तदसत् हितोपदेशमात्रतत्परस्यातिवत्सलस्य राज्ञो मत्सरिण इव महावीरे भ्रातरि विषये सर्वानर्थमूलभूतनिन्दातात्पर्यकल्पनानौचित्यादिति ॥ २८

अव—यदि साधूक्तं तर्हि तथैव क्रियतामित्याशङ्क्याह—

**अवितृप्ततयेति** ॥ तथापि त्वया सम्यङ्गनिर्णीतेऽपि मे हृदयं अवितृप्ततया असंतुष्टतया अद्यापि संशयगतत्वेनेत्यर्थः । निर्णयमेव धावति अनुसरति अपेक्षत इति यावत् । अद्यापि निर्णयस्यानुदयादिति भावः। निर्णयानुदये हेतुमाह— अवेति ॥ विधेयेषु सन्धिविग्रहादिकर्तव्यार्थेषु या विशेषसम्पदः अवान्तरभेदभूमानः ताः सु खं अक्लेशेन । अवसाययितुं पुरुषान्प्रत्यानुकूल्येन स्वस्वरूपं स्वयमेव

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धास्स्वयमेव सम्पदः ॥ ३०

अभिवर्षति योनुपालयन् विधिबीजानि विवेकवारिणा ।

---

शीघ्रं प्रत्याययितुमित्यर्थः । 'स्यतेर्ण्यन्तादणि कर्मकर्तृकात्तुमुन् णेरणादिसूत्रस्यायं विषयः क्षमन्त इति क्षमाः पचाद्यच् शक्ताः न भवन्ति । 'क्षमं शक्ते हिते त्रि' ष्वित्यमरः । यद्वा सुखं यथातथा पुरुषैः विशेषसम्पदोऽवसाययितुं न क्षमाः न शक्याः क्षम्यन्त इति क्षमाः कर्मणि । षिद्भिदादिभ्योऽङ् † विधेयमात्रस्य सुगमत्वेपि तद्विशेषाणां सौक्ष्म्याद्बाहुल्याच्च दुर्ज्ञेयत्वादद्यापि निर्णयाकाङ्क्षेति तात्पर्यार्थः । अत्र निर्णयधावनं प्रत्युत्तरवाक्यार्थस्य हेतुत्वेनाभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं । श्लो । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृत' मिति ॥ २९

अव—अस्तु विशेषावधारणमन्तरेणैव प्रवृत्तिरित्याशङ्क्याह—

**सहसेति** ॥ क्रियत इति क्रिया कार्यं तां सहसा अविमृश्येत्यर्थः । सहसेत्याकस्मिकाविमर्शयोरिति गणव्याख्याने । स्वरादिपाठादव्ययत्वं । न विदधीत कुतः । अविवेकः अविमृश्यकारित्वं परमत्यन्तं आपदां पदं स्थानं विपत्तिकारणमित्यर्थः । व्यतिरेकेणोक्तमर्थमन्वयेनाह—वृणत इति । गुणलुब्धाः गुणगृध्नव इति स्वयंवरणहेतूक्तिः । सम्पदः श्रियः विमृश्य करोतीति विमृश्यकारी 'उपपदमतिङि'ति समासः । तं स्वयमेव वृणते भजन्ते हि 'वृङ्सम्भक्ता'विति धातुः । तस्माद्विमृश्यैव प्रवर्तितव्यमित्यर्थः । अत्र सहसा विधाननिषेधलब्धविमृश्यकारित्वरूपकारणस्यापद्रूपव्यतिरेककार्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यासः । द्वितीयार्धे च स एव साधर्म्येणेति ज्ञेयम् ॥ ३०

अव—ननु साहसिकस्यापि फलसिद्धिर्दृश्यत एव तत्किं विवेकेनेत्यत्राह—

**अभीति** ॥ यः पुमान् विधीयन्त इति विधयः कृत्यवर्गास्तानि बीजानीवेत्युपमितसमासः । शरदं लोक इवेति वाक्यगतोपमानुसारात् तानि विधिबीजानि विवेको वारीव तेन विवेकवारिणा पूर्ववत्समासः । अनुपालयन् प्रतीक्षमाणस्सन् रक्षन्नभिवर्षति सिञ्चति स पुमान् फलं साधननिष्पाद्योर्थः सस्यं च ।

---

† अत्र पक्षेऽवसाययितुमित्यत्र स्वार्थे णिजिति बोध्यम् ॥

स सदा फलशालिनीं क्रियां शरदं लोकइवाधितिष्ठति ॥ ३१

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया ।
प्रशमाभरणं पराक्रमस्स नयापादितसिद्धिभूषणः ॥ ३२

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥ ३३

---

नि । 'सस्ये हेतुकृते फल' मित्युभयत्राप्यमरः । तच्छालिनीं क्रियां कर्म लोको जनः । नि । "लोकस्तु भुवने जन" इत्यमरः । शरदमिव सदा अधितिष्ठति सदा क्रियाफलं प्राप्नोत्येव न कदाचिद्व्यभिचरतीत्यर्थः । साहसिकस्य फलसिद्धिः काकतालीया विवेकिनस्तु नियतेति भावः । अत्र फलशब्देन सस्यहेतुकृतयोरर्थयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः तदनुगृहीता चोपमेत्यनुसन्धेयम् ॥ ३१

अव—नियता विवेकिनः फलसिद्धिरित्युक्तं सम्प्रति तामेव रुच्यर्थं स्तौति—

**शुचीति ॥** शुचि सम्प्रदायशुद्धं श्रुतं शास्त्रश्रवणं कर्तृ वपुर्भूषयति अन्यथा अविद्वान्पुरुषः शोच्य इति भावः । तस्य श्रुतस्य प्रशमः क्रोधोपशान्तिः अलंक्रिया भूषणं भवति अन्यथा श्रुतवैफल्यादिति भावः । पराक्रमः सत्यवसरे शौर्यं प्रशमस्याभरणं अन्यथा सर्वैः परिभूयत इति भावः । स पराक्रमः नयापादिता नीतिसम्पादिता विवेकपूर्विकेति यावत् । सा चासौ सिद्धिश्च सैव भूषणं यस्य स तथोक्तः अन्यथा साहसिकस्य सिद्धेः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यादिति भावः । 'वपुषो भूष्यतैवात्र सिद्धेर्भूषणतैव तु । उभयं मध्यमानां तु स्वस्वपूर्वोत्तरेच्छये'ति विवेकः । एवं विशिष्टसिद्धेरनन्यभूषितायाएव भूषणत्वोक्त्या सर्वोत्तरतया स्तुतिर्गम्यते । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वादेकावल्यलङ्कारः—तदुक्तं 'यत्र विशेषणभावं पूर्वं पूर्वं प्रतिक्रमेणैव । भजति परस्परमेषालंकृतिरेकावली कथिता' इति ॥ ३२

अव—विमृश्य कुर्यादिति स्थितं तत्र विमर्शोपायः क इत्युक्ते शास्त्रमेवेत्याह—

**मतीति ॥** मतिभेदः कार्यविप्रतिपत्तिः मतिभेदस्तम इवेत्युपमितसमासः । दीप इवेत्युपमानुसारात् । तेन तिरोहिते पिहिते अतएव गहने दुरवगाहे कृत्यविधौ कार्यानुष्ठाने विवेकिनां सुकृतः स्वभ्यस्तः बहुभ्यो बहुशः श्रुत

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समस्समुन्नतेः ॥ ३४

शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतिम् ।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥ ३५

---

इत्यर्थः ॥ अतएव परिशुद्धो निश्चितः सम्प्रदायप्राप्तः अन्यत्र सुविहितः प्रवातादि-दोषरहितश्च आगमश्शास्त्रं । नि । 'आगमश्शास्त्र आयाते' इति विश्वः । दीप इव अर्थदर्शनं कार्यज्ञानं वस्तुप्रतिभानं च कुरुते ॥ ३३

अव—एवं विमृश्य कुर्वतो दैवादनर्थागमेऽपि न कश्चिदपराध इत्याह—

**स्पृहणीयेति ॥** स्पृहणीयगुणैः लोकश्लाघ्यगुणैः महात्मभिस्सज्जनैः चरिते अनुष्ठिते वर्त्मनि आचारे मनो यच्छतां निदधतां सन्मार्गेण व्यवहरता-मित्यर्थः । विधिहेतुर्दैवनिमित्तः । नि । 'विधिर्विधाने दैवेचे'त्यमरः। अत एव आगसा-मपराधानां अहेतुः विनिपातोऽपि दैविकाऽनर्थोऽपि । नि । 'विनिपातोवपाते स्याद्दैवादिव्यसनेपि चे'ति विश्वः । समुन्नतेरभिवृद्धेः समः तुल्यः दैविके पुरुष-स्यानुपालभ्यत्वादिति भावः । यथाह कामन्दकः 'यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययं । पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुष' इति ॥ ३४

अव—सम्प्रति यद्विमृश्यं तदाह—

**शिवमिति ॥** जिगीषवो जयेच्छवो नृपाः विजितक्रोधरयाः विजित-क्रोधवेगास्सन्तः गरीयसीं प्रभूतां अदूषितायतिं अक्षतोत्तरकालं स्वन्तामित्यर्थः फलनिष्पत्तिं फलसिद्धिं विगणय्य फलवत्त्वं निश्चित्येत्यर्थः । पौरुषं पुरुषकारं शिवमनुकूलं औपयिकं उपायं 'विनयादित्वात्स्वार्थे ठक् उपायाद्ध्रस्वत्वं च' इति ह्रस्वः । नयन्ति प्रापयन्ति पौरुषमुपायेन योजयन्तीत्यर्थः । नानिश्चितफलं कर्म कुर्वत इति भावः । यथाह कामन्दकः । श्लो । 'निष्फलं क्लेशबहुलं सन्दिग्ध-फलमेवच । न कर्म कुर्यान्मतिमान् सद वैरानुबन्धिचे'ति । नयतिः प्रापणार्थे द्विकर्मकः । अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽप्युपायस्यातथात्वात् क्रोधं विनयत इत्यादिवत् । 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदं न भवति ॥ ३५

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥ ३६

बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलास्सकला हन्ति स शक्तिसम्पदः ॥ ३७

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥ ३८

---

**अपनेयमिति ॥** उदेतुमभ्युदेतुं विवर्धितुमिति यावत्। इच्छता पुरुषेण पुरः प्रथमं रोषमयं रोषादागतं । 'मयट्'चेति मयट् । तिमिरमज्ञानं धिया विवेकबुध्या करणेन अपनेयं अपनोद्यं तथाहि अंशुमतापि कर्त्रा प्रभया तेजसा करणेन निशाकृतं रात्रिविहितं तमोध्वान्तं अविभिद्य नोदीयते किन्तु विभिद्यैवेत्यर्थः। सूर्यस्याप्येवं किमुतान्येषामित्यपिशब्दार्थः। इणोभावे लट् ॥ ३६

अव—ननु दुर्बलस्यैवमस्तु बलीयसस्तु क्रोधादेव कार्यसिद्धिरित्यत आह—

**बलवानिति ॥** बलवान् शूरोपि यः। कोपाज्जन्म यस्य तस्य कोपजन्मनः 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद' इति वामनः । तमसो मोहस्य। कृद्योगात्कर्तरि षष्ठी। अभिभवमाक्रान्ति न रुणद्धि न निवारयति स नृपः। क्षयस्य पक्षः क्षयपक्षः कृष्णपक्ष इत्यर्थः। ऐन्दवीः इन्दुसम्बन्धिनीः कला इव। नि। 'कला तु षोडशो भाग' इत्यमरः। सकलाः शक्तिसम्पदः प्रभुशक्तिं कोशदण्डबलां मन्त्रशक्तिं ज्ञानबलां उत्साहशक्तिं विक्रमबलामिति तिस्रोपि शक्तीः हन्ति नाशयति अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थमेवेत्यर्थः। अत्र कालस्य सर्वकारणत्वात् क्षयपक्षस्य कलाक्षयकारित्वमस्त्येव। तमसस्तु तत्कालविजृम्भणात्तथा व्यपदेशः॥ ३७

अव—अथ विमृश्य कुर्वतः क्रियाप्रकारमाह—

**समेति ॥** यः समा नातिमृदुर्नातितिग्मा वृत्तिर्यस्य समवृत्तिस्सन् समये सत्यवसरे मार्दवं मृदुवृत्तित्वमुपैति तिग्मतां तीक्ष्णवृत्तित्वं च तनोति स मेदिनीपतिः विवस्वानिव ओजसा तेजसा लोकं अधितिष्ठति आक्रामति सूर्योपि ऋतुभेदेन प्रातःकालादिभेदेन वा समवृत्तिरित्यादि योज्यं। तथा चोक्तं 'मृदुदण्डः परिभूयते तीक्ष्णदण्ड उद्वेजको भवति यथार्हदण्डः पूज्यत' इति॥ ३८

क चिराय परिग्रहश्श्रियां क च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाश्श्रियः ॥ ३९

किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः ।
क्रियते पतिरुच्चकैरपां भवता धीरतयाधरीकृतः ॥ ४०

श्रुतमप्यधिगम्य ये रिपून्विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् ॥ ४१

---

अव—उक्तान्यथाकरणे दोषमाह—

**केति ॥** श्रियां सम्पदां चिराय बहुकालं परिग्रहः स्वायत्तीकरणं क इन्द्रियाणि वाजिन इवेत्युपमितसमासः। दुष्टानाममार्गधाविनां इन्द्रियवाजिनां वश्या वशंगताः तेषां भावस्तत्ता क । नोभयमेकत्र तिष्ठतीत्यर्थः । कुतः हि यस्मात् शरदभ्रवच्चलाश्चञ्चलाः। किं च। बहुच्छलाः। बहुव्याजाः बहुरन्ध्रा इति यावत्। नि। 'छलं तु स्खलिते व्याज' इति विश्वः। श्रियस्सम्पदः। चलेन्द्रियैरजितेन्द्रियैरित्यर्थः। असुरक्षाः रक्षितुमशक्याः कथंचित्प्राप्ता अपि श्रियो नाविनीते तिष्ठन्तीत्यर्थः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३९

अव—क्रोधस्य दुष्टतामुक्त्वा तस्य त्यागमुपदिशति—

**किमिति ॥** उपात्तरंहसः प्राप्तत्वरस्य मनसः समयोऽवसरोऽस्य प्राप्तस्सामयिकः समयस्तदस्य प्राप्तमिति ठञ्। स न भवतीत्यसामयिकस्तमप्राप्तकालं क्षोभं वितन्वता भवता धीरतया धैर्यगुणेन। श्लो। 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतु' ष्विति रसिकाः। अधरीकृतः तिरस्कृतः। प्रागिति शेषः अपां पतिरब्धिः इदानीं किं किमर्थं उच्चकैः अधिकः क्रियते न पराजितं पुनरुच्चकैः कुर्यादिति भावः। अत्र वितन्वतेति भीमविशेषणस्य पदार्थस्यापां पतेरुच्चैःकरणहेतुत्वात्काव्यलिङ्गमलङ्कारः॥ ४०

**श्रुतमिति ॥** किं च ये श्रुतं शास्त्रमधिगम्यापि शरीरजन्मनः शरीरप्रभवान् रिपून् कामक्रोधलोभमोहादीन् न विनयन्ते न नियच्छन्ति न नुदन्तीत्यर्थः। 'कर्तृस्थे चाशरीरे कर्मणी'त्यात्मनेपदं। ते खल्वचिराय झडिति सम्पदां चापलाश्रयमस्थैर्यनिबन्धनमयशो दुष्कीर्तिं जनयन्ति आश्रयदोषादस्थैर्यं सम्पदां न स्वदोषादित्यर्थः। अजितारिषड्वर्गस्य कुतस्सम्पद इति भावः॥ ४१

अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी ।
जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति ॥ ४२

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ४३

प्रणतिप्रवणान्विहाय नस्सहजप्रेमनिबद्धचेतसः ।

---

अव—तथा क्रोधात्कार्यहानिरित्याशयेनाह—

**अतिपातितेति ॥** अतिपातितानि अतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि च यया सा तथोक्ता तापयतीति तापनी। कर्तरि ल्युट्ट्टित्वात् ङीप् स्वस्य यच्छरीरं इन्द्रियवर्गश्च तयोस्तापनी अक्षमा क्रोधः भवन्तं जनवत् पृथग्जनमिव । तेन तुल्यं क्रियाचेद्वतिरिति वतिप्रत्ययः तेनेवार्थो लक्ष्यते । तद्धितश्चासर्वविभक्तिरित्यव्ययत्वं नयसिद्धेः नीतिशास्त्रसाधनफलात् अपनेतुं पृथक्कर्तुं नार्हति असमयक्रोधस्यात्मसन्तापातिरक्तं फलं नास्तीर्थः ॥ ४२

अव—दुष्टः क्रोध इत्युक्तमथ क्षमाया गुणानाह—

**उपकारकमिति ॥** आयतेरुत्तरकालस्य भृशमत्यन्तमुपकारकं स्थिरफलहेतुरित्यर्थः। भूरिणः प्रभूतस्य कर्मफलस्य। प्रसूयते अनेनेति प्रसवः कारणं। अपायि न भवतीत्यनपायि स्वयमविनश्यदेव द्विषां निबर्हणं विनाशकं एवंगुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति । नि । 'क्षांतिस्तितिक्षे' त्यमरः 'तिज निशान' इति धातोः। गुप्तिज्किद्भ्यस्सनिति क्षमार्थे सन्प्रत्ययः। तितिक्षासममित्यनुक्तोपमेया समासगा आर्थी लुप्तोपमा भृशभूर्यनपायिशब्दैस्साधनान्तरवैलक्षण्याद्व्यतिरेकश्च व्यज्यते । भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये च व्यतिरेकः ॥ ४३

अव—ननु तितिक्षया कालक्षेपे सुयोधनस्सर्वान् राज्ञो वशीकुर्यादित्यत्राह—

**प्रणतीति ॥** सहजस्नेहेन अकृत्रिमप्रेम्णा निबद्धचेतसः अस्मासु गाढं लग्नचित्ताः सुयोधने तु न तथेति भावः। किं च मानभृतां अहंकारिणां प्रथमे अग्रेसराः वृष्णयो यादवाः प्रणतिप्रवणान् प्रणामपरान् सुयोधनस्तु न तथेति

प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः ॥ ४४

सुहृदस्सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये ।
विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥ ४५

अभियोग इमान्महीभुजो भवता तस्य कृतः कृतावधेः ।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥ ४६

---

भावः । नः अस्मान् विहाय सुयोधनं सदा न प्रणमन्ति नानुसरन्ति किन्तु कार्यकाले त्यक्ष्यन्त्येवेत्यर्थः । सति यादवपरिग्रहे न किञ्चिदस्माकमसाध्यं भवेदिति भावः । अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४

अव—कारणान्तरमाह—

**सुहृद इति** ॥ किञ्च एषां वृष्णीनां ये सहजाः सह जाताः मातृ पितृपक्ष्या इत्यर्थः 'अन्येष्वपि दृश्यत' इति डप्रत्ययः । सुहृदो मित्राणि । तथा इतरे कृत्रिमसुहृदश्च । (धनजीवनहेतोराश्रिताः कृत्रिमसुहृदः) मतं वृष्णिपक्षं न विलङ्घयन्ति नातिक्रामन्ति ते द्वयेपि नृपाः दुर्योधनोपजीविनोऽपीति भावः । आत्मसिद्धये स्वजीवनाय धृतराष्ट्रात्मजं दुर्योधनं विनयादानुकूल्यादिव यापयन्ति कालं गमयन्ति कार्यकाले तु तेऽपि वृष्णिपक्षप्रवेशिन एवेत्यर्थः यातेर्ण्यन्ता लट् अर्तिह्रीत्यादिना पुगागमः ॥ ४५

अव—किञ्च नायमभियोगकाल इत्याशयेनाह—

**अभियोग इति** ॥ कृतावधेः परिभाषितकालस्य । 'अवधिस्त्ववसाने स्यात्सीम्नि काले बिलेपिचे'ति विश्वः । तस्य सुयोधनस्य कर्मणि षष्ठी भवता कृतः अवधित इति शेषः । अभियोगः आहवः अभियानमिति यावत् । नि । 'अभियोगस्तु शपथे स्यादाहवपराभव' इति विश्वः । इमान् पूर्वोक्तान् महीभुजो राज्ञः हरिदश्वः उष्णरश्मिः कमलाकरानिव समुत्पतन् उद्यन्नेव प्रविघाटयिता भेत्स्यति । घटेश्चौरादिकाल्लुट् । भौवादिकस्य तु मितां ह्रस्व इति ह्रस्वत्वं स्यात् ॥ ४६

उपजापसहान् विलङ्घयन् स विधाता नृपतीन् मदोद्धतः ।
सहते न जनोऽप्यधः क्रियां किमु लोकाधिकधाम राजकम् ॥ ४७

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४९

---

अव—अथ न ये वृष्णिपक्ष्यास्तान् प्रत्याह—

**उपजापेति** ॥ मदोद्धतः स दुर्योधनः नृपतीन् अन्यानपि नृपान् विलङ्घयन् मदादवमानयन् सहन्त इति सहाः तान् पचाद्यच् उपजापस्य सहान् भेदयोग्यान् । नि । 'भेदोपजापावुपधे' त्यमरः । विधाता विधास्यति । विपूर्वस्य दधातेर्लुट् अवमानितो जनः सुभेद इति भावः । न च ते सहिष्णव इत्याह जनः प्राकृतोपि अधः क्रियां अवमानं न सहते लोकाधिकधाम लोकोत्तर-प्रतापं राजकं राजसमूहः । 'गोत्रोक्षोष्ट्रे'त्यादिना वुञ् प्रत्ययः । किमु न सहत इति किमुवक्तव्यमित्यर्थः तथा च कृत्स्नमपि राजमण्डलमस्मानेवावलम्बिष्यत इति भावः ॥ ४७

अव—ननु सखीनिवेत्यादि वनेचरोक्त्या तस्य मदसम्भावनापि कथमित्यत आह—

**असमापितेति** ॥ असमापितकृत्यसम्पदां अकृतकृत्यानां सावशेषित-कर्मणामित्यर्थः । कुतः अभिमानशालिनां अहङ्कारिणां विभूतयः सम्पद एव तावता स्वल्पेन विनयेन कार्यवशादारोपितेनेति शेषः । हतवेगं प्रतिबद्धोद्रेकं न तु स्वरूपतो हतं । मदं उत्तम्भयितुं वर्धयितुं प्रभवन्ति समर्था भवन्ति सर्वथा दुर्जनं सम्पदो विकारयन्तीति भावः ॥ ४८

अव—अथ मदस्यानर्थहेतुतां युग्मेनाह—

**मदेति** ॥ अपरागेति च । मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढता अकार्यज्ञता नियमेन अवश्यं न वियुङ्क्ते न विमुञ्चति । अतिमूढः नयान्नीतिमार्गात् उदस्यते उत्क्षिप्यते । कर्मकर्तरि लट् नयहीनात् जनः अपरज्यते अपरक्तो भवति स्वरितेत्त्वादात्मनेपदम् ॥ ४९

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ५०

अणुरप्यपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः ॥ ५१

मतिमान् विनयप्रमाथिनस्समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥ ५२

---

अपरागः अप्रीतिर्द्वेष इति यावत् । समीरण इव तेनेरितश्चालितः अतएव क्रमेण शीर्णा शीर्णीभूता आकुला चला च मूलसन्ततिः प्रकृत्यादिस्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः । नि । 'मूलं वशीकृते स्वीये शिफा तारान्तिकादिष्वि' ति वैजयन्ती । रिपुर्महानपि तरुवत् वृक्ष इव सहिष्णुना क्षमावता उन्मूलयितुं उद्धर्तुं ध्वंसयितुं सुकरस्सुसाध्यः सुकरोन्मूलन इत्यर्थः । अत्र मदादेः पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्कारणमाला तरुवदित्युपमा चेति द्वयोः संसृष्टिः ॥ ५०

अव—नन्वन्तर्भेदमात्रेण कथं सुसाध्य इत्यत आह—

**अणुरिति ॥** अणुः अल्पोपि अन्तःप्रकृतिप्रकोपजः अन्तरङ्गामात्याद्यपराधसमुद्भवः । नि । 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे । छन्दः कारण गुह्येषु जन्त्वमात्यादिकेष्वपी.'ति वैजयन्ती । विग्रहो वैरं प्रभुमुपहन्ति नाशयति अत्र दृष्टान्तमाह । तरुशाखान्तानां निघर्षो घर्षणं तज्जोऽनलोऽग्निः भूधरं गिरिमखिलं साकल्येन हिनस्ति हि दहतीत्यर्थः । अत्रोपमानोपमेयसमानधर्माणां बिम्बप्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कारः ॥ ५१

अव—तथापि वर्धमानं शत्रुं कथमुपेक्षेतेत्याशङ्क्य दुर्विनीतत्वादित्याह—

**मतिमानिति ॥** मतिमान् प्राज्ञः विनयं प्रमथ्नाति त्यजतीति विनयप्रमाथिनः दुर्विनीतस्य द्विषः शत्रोः समुन्नतिं वृद्धिं समुपेक्षेत उपेक्षायाः फलमाह तादृक्तादृग्विधः अविनीत इत्यर्थः । अन्तरे क्वचिद्रन्ध्रे सुजयः सुखेन जेतुं शक्यः खलु हि यस्मात् अविनीतस्य दुर्जनस्य सम्पदः विपदन्ताः विपन्मर्यादकाः । अनर्थोदर्का इत्यर्थः ॥ ५२

लघुवृत्ततया भिदां गतं बहिरन्तश्च नृपस्य मण्डलं ।
अभिभूय हरत्यनन्तरश्शिथिलं कूलमिवापगारयः ॥ ५३

अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थइवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ ५४

मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५

---

अव—कथं दुर्विनीतस्य शत्रोस्सुजयत्वमित्याशङ्क्य भेदजर्जरितत्वादित्याह—

**लघ्विति ॥** लघुवृत्ततया स्वस्य दुर्वृत्ततया बहिर्मित्रादिजानपदेषु। अन्तरमात्यादिषु च भिदां भेदं गतं प्राप्तं षिद्भिदादिभ्योऽङित्यङ् प्रत्ययः। नृपस्य मण्डलं राष्ट्रं अनन्तरसन्निहितः जिगीषुः । आपगारयो नदीवेगः शिथिलं अन्तर्भेदजर्जरं कूलमिव अभिभूय आक्रम्य हरति ॥ ५३

**अन्विति ॥** इतीत्थं आकुलं अरिनिकारस्मरणात् क्षुभितं अर्जुनाग्रजं भीमसेनं नयवर्त्म नीतिमार्गं अनाकुलमसङ्कीर्णं यथा तथानुशासतमुपदिशन्तम्। जक्षित्यादयष्षडित्यभ्यस्तत्वान्नुमभावः । यद्वा नयवर्त्माकुलं नीतिमार्गस्खलितं भीमं इतीत्थमनुशासतं शिक्षयन्तं तं युधिष्ठिरं पराशरात्मजो वेदव्यासः स्वयमभिवाञ्छितोऽर्थं इव साक्षान्मनोरथ इवेत्युत्प्रेक्षा। अभीयाय प्राप्तः॥ ५४

अव—अथ युग्मेन तमेवाह—

**मधुरैरिति ॥** सहसेति च । मधुरैः शान्तैः निरीक्षितैरवलोकनैः। नपुंसके भावे क्तः न विद्यते वश आयत्तत्वं येषां तान्यवशानि प्रतिकूलानि। नि। 'वश आयत्ततायां च'ति विश्वः। तिर्यञ्चि मृगपक्ष्यादीन्यपि शमं शान्तिं लम्भयन् प्रापयन्। लभेश्चेति नुमागमः गतिबुद्धीत्यादिना द्विकर्मकत्वं पटु उज्ज्वलं एनसां पापानां। दह्यतेऽनेनेति दहनं निवर्तकं तथापि विलोकनक्षमं दर्शनीयं वह्न्यादिविलक्षणमिति भावः। परितः अभितः धाम तेजो बिभ्रत्॥ ५५

सहसोपगतस्सविस्मयं तपसां सूतिरसूतिरापदां ।
ददृशे जगतीभुजा मुनिस्स वपुष्मानिव पुण्यसञ्चयः ॥ ५६

अथोच्चकैरासनतः परार्ध्यादुद्यन्स धूतारुणवल्कलाग्रः ।
रराज कीर्णाकपिशांशुजालश्शृङ्गात्सुमेरोरिव तिग्मरश्मिः ॥ ५७

अवहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् ।
तदनुमतमलञ्चकार पश्चात्प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ५८

व्यक्तोदितस्मितमयूखविभासितोष्ठ-
स्तिष्ठन् मुनेरभिमुखं स विकीर्णधाम्नः ।

---

पुनः सहसोपगतः अकस्मादागतः तपसां सूतिः प्रभवः । आपदां असूतिः अप्रभवः निवर्तक इति यावत् । स मुनिर्व्यासः वपुष्मान् मूर्तिमान् पुण्यसञ्चयः पुण्यराशिरिवेत्युत्प्रेक्षा । जगतीभुजा राज्ञा युधिष्ठिरेण सविस्मयं साश्चर्यं ददृशे दृष्टः ॥ ५६

**अथेति** ॥ अथ दर्शनानन्तरं उच्चकैरुन्नतात्परार्ध्यात् श्रेष्ठात् । अर्धाद्यत् । परावराधमोत्तम पूर्वाच्चेति यत्प्रत्ययः आसनतः सिंहासनात् उद्यन् उत्तिष्ठन् अत एव धूतानि कम्पितानि अरुणानि वल्कलाग्राणि यस्य स तथोक्तः । स राजा कीर्णं विस्तृतमाकपिशं अंशुजालं यस्य स तथोक्तः । सुमेरोः शृङ्गादुद्यन् तिग्मरश्मिरिव रराज शुशुभे ॥ ५७

**अवहितेति** ॥ स नरेन्द्रः अवहितहृदयोऽप्रमत्तचित्तस्सन् । नि । 'चित्तं तु चेतो हृदय' मित्यमरः । ऋषिप्रवरे मुनिश्रेष्ठे ऋषिवत् ऋष्यर्हाम् । अर्हार्थे वतिप्रत्ययः । गुरूपदिष्टां मन्वादिप्रणीतां शास्त्रीयामित्यर्थः । अर्हां पूजाम् गुरोश्च हल इत्यकारप्रत्ययः । विधाय कृत्वा पश्चादनन्तरं तदनुमतं तेनानुज्ञातं आसनं प्रशमश्शान्तिः श्रुतं शास्त्रश्रवणमिव अलञ्चकार । उक्तं च पूर्वं 'प्रशमस्तस्य भवत्यलंक्रिये'ति मुन्यनुज्ञयोपविष्टवानित्यर्थः ॥ ५८

**व्यक्तेति** ॥ व्यक्तोदितैः स्पष्टोद्गतैः स्मितमयूखैः विभासितावोष्ठौ यस्य स तथोक्तः विकीर्णधाम्नः विस्तृततेजसः मुनेरभिमुखं तिष्ठन् सः नृपः इद्धं

तन्वन्तमिद्धमभितो गुरुमंशुजालं

लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्तेः ॥ ५९

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये

लक्ष्मीपदलाञ्छने द्वितीयस्सर्गः ॥

---

दीप्तं अंशुजालं तन्वतं गुरुं गीष्पतिम् । नि । 'गुरूगीष्पतिपित्राद्या' वित्यमरः । 'अभितः परित'इत्यादिना द्वितीया । अभितोऽभिमुखं । तिष्ठत इति शेषः । सकलस्य सम्पूर्णस्य शशाङ्का मूर्तिर्यस्य तस्य इन्दोः लक्ष्मीं उवाह वहतिस्म अत्रोपमेयस्य राज्ञः उपमानेन्दुधर्मेण लक्ष्म्या साक्षात्सम्बन्धासम्भवात्तत्सदृशीं लक्ष्मीमिति प्रतिबिम्बकरणाक्षेपादसम्भवद्वस्तुसम्बन्धात् पदार्थवृत्तिनिदर्शनालङ्कारः । तदुक्तं प्रतिबिम्बस्याकरणं सम्भवता यत्र वस्तुयोगेन । तत्साम्यमसम्भवता निदर्शना सा द्विधाभिमते' ति ॥ ५९

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय

कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां

घण्टापथसमाख्यायां द्वितीयस्सर्गः ॥

---

## ॥ तृतीयस्सर्गः ॥

ततश्शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तटित्वन्तमिवाम्बुवाहम् ॥ १

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २

---

अव—अथ त्रिभिर्मुनिं विशिंषन् चतुर्भिश्श्लोकैः कलापकमाह तदुक्तम्—

श्लो ॥ 'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिश्श्लोकैर्विशेषकं । कालापकं चतुर्भिस्स्यात्तदूर्ध्वं कुलकं स्मृत' मिति । * तत इति । ततः उपवेशनानन्तरं शरच्चन्द्रकराभिरामैः तद्वदाह्लादकैरित्यर्थः । उत्सर्पिभिः ऊर्ध्वं प्रसारिभिः अंशुजालैः प्रभापटलैः प्रांशुमुन्नतमिव स्थितमित्युत्प्रेक्षा । पुनरानीलरुचं कृष्णवर्णं पिशङ्गीः पिङ्गलवर्णाः गौरादित्वात् ङीप् । जटाः बिभ्राणं धारयन्तं अतएव तटित्वन्तं विद्युद्युक्तं अम्बुवाहमिव स्थितमित्युपमा । धर्मात्मजो मुनिमाबभाषे इति चतुर्थश्लोकस्थेनान्वयः ॥ १

**प्रसादेति ॥** पुनः समग्रां सम्पूर्णां प्रसादस्सौम्यता तस्य लक्ष्मीं सम्पदं दधतं अतएव जनमतिगच्छतीति जनातिगेन लोकातिशायिना । अन्येष्वपि दृश्यत इति जनेर्डप्रत्ययः । वपुः प्रकर्षेण आकारसम्पदा असंस्तुतानामपरिचितानामपि व्यासोऽयमित्यजानतामपीत्यर्थः । नि । 'संस्तवस्स्यात्परिचय' इत्यमरः । चेतस्सु चित्तेषु आर्द्रं स्नेहार्द्रं भावमभिप्रायं प्रसह्य बलात् समासजन्तं लगयन्तमिति यावत् । 'दंशसञ्जस्वंजांशपी'त्युपधालोपः । प्रसन्नाकारेषु सर्वोऽपि स्निह्यतीति भावः ॥ २

---

* साहित्यदर्पणे तु । 'छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकं । द्वाभ्यां तु युग्मकं सन्दानितकं त्रिभिरिष्यते । कलापकं चतुर्भिश्च पञ्चभिः कुलकं मत' मित्युक्तम् ॥

अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिं ।
माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भाषमिवेक्षितेन ॥ ३

धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुस्सुखोपविष्टं मुनिमाबभाषे ॥ ४

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजास्सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतवलाहकायाः ॥ ५

---

**अनुद्धतेति ॥** पुनः अनुद्धताकारतया शान्ताकारतया लिङ्गेन अन्तःकरणस्य वृत्तिं विविक्तां पूतां शान्तामिति यावत् । नि । 'विविक्तौ पूतविजना'-वित्यमरः । तन्वन्तं प्रकटयन्तं आकृतिरेवास्य चित्तशुद्धिं कथयतीत्यर्थः । पुनः माधुर्यं निसर्गसौम्यता विस्रम्भो विश्वासः तयोर्विशेषमतिशयं भजतीति तथोक्तेन । नि । 'समौ विस्रम्भविश्वासा'वित्यमरः । ईक्षितेन दर्शनेनैव कृता उपसम्भाषा परिभाषणं येन तमिवेत्युत्प्रेक्षा । दृष्टिविशेषेणैवोपसम्भाषमाणमिव स्थितमित्यर्थः । काशिकायां तु उपसम्भाषा उपसान्त्वन मिति भासनादिसूत्रे उक्तम् ॥ ३

**धर्मेति ॥** पुनः धर्मान् निबध्नन्तीति धर्मनिबन्धिनीनां अग्निहोत्रादि-धर्मप्रतिपादिकानां एनःप्रणुदां अघच्छिदाम् क्विप् । श्रुतीनां वेदानाम् । नि । 'श्रुतिः स्त्री वेद आम्नाय' इत्यमरः । प्रसूतिं प्रभवं सुखेनोपविष्टं आसीनं मुनिं तदभ्यागमने तस्य मुनेः आगमने हेतुं कारणं परीप्सुः जिज्ञासुः । आप्नोतेस्स-न्नन्तादुप्रत्ययः । आप्ज्ञप्यृधामीदितीकारः । अत्र लोपोभ्यासस्येत्यभ्यासलोपः । धर्मात्मजो युधिष्ठिरः आबभाषे उवाच ॥ ४

**अनाप्तेति ॥** अनाप्तपुण्योपचयैः अकृतपुण्यसङ्ग्रहैः दुरापा दुर्लभा फलस्य सवित्री श्रेयस्करीत्यर्थः । निर्धूतरजाः हतरजोगुणा अन्यत्र निरस्तधूलिश्च । नि । 'रजो रजोगुणे धूळौ परागार्तवयोरपी'ति विश्वः । एषा भवद्दर्शनस्य सम्पत् सम्पत्तिः लाभ इति यावत् । सम्पदादिभ्यः क्विपो भावार्थत्वात् वीतवलाह-कायाः गतमेघायाः दिवः अन्तरिक्षस्य सम्बन्धिन्याः वृष्टेः तुल्येनेत्युपमालङ्कारः । अनभ्रवृष्टिवदतर्कितोपपन्नं भवद्दर्शनं सर्वथा कस्यचिच्छ्रेयसो निदानमित्यर्थः । वारि वहतीति बलाहकः पृषोदरादित्वात्साधुः ॥ ५

अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषस्सम्प्रति भूमिदेवाः ।
आसंसृतेरस्मि जगत्सुजातस्त्वय्यागते यद्बहुमानपात्रम् ॥ ६
श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिं ।
सन्दर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते ॥ ७
श्च्योतन्मयूखेऽपि हिमद्युतौ मे न निर्वृतं निर्वृतिमेति चक्षुः ।
समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसितीव चेतः ॥ ८

---

**अद्येति** ॥ अद्य क्रतूनां क्रियाः अनुष्ठानानि । कामान् दुहन्तीति कामदुघाः फलदा इत्यर्थः । 'दुहः कप्घश्चे'ति कप्प्रत्ययो घादेशश्च । सम्प्रति अद्य भूमिदेवाः ब्राह्मणाश्च । नि । 'द्विजात्यग्रजन्मभूदेवबाडबाः । विप्रश्च ब्राह्मण' इत्यमरः । सत्याशिषो जाताः । तत् ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः । यद्यस्मात्कारणात् त्वय्यागते सति त्वदागमननिमित्तेनेत्यर्थः । अस्मीत्यहमर्थेऽव्ययं अस्मीत्यस्मदर्थानुवादे अहमर्थेऽपीति गणव्याख्याने । श्लो । 'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये' इति प्रयोगश्च । आसंसृतेरासंसारात् यावत्संसारमित्यर्थः' । अभिविधावाङ् । विकल्पादसमासः । जगत्सु बहुमानपात्रं बहुमानयोग्यो जातः सकलसत्कर्मफलभूतं त्वदागमनं । येन मे जगन्मान्यतेति भावः ॥ ६

**श्रियमिति** ॥ आत्मयोनेः ब्रह्मण इव लोकगुरोः तव अमोघमविफलं सन्दर्शनं श्रियं विकर्षति आकृष्य ददाति अघानि दुःखानि अपहन्ति । नि । 'वृजिनैनोघमंहो दुरितदुष्कृत' मित्यमरः । श्रेयः पुरुषार्थं परिस्नौति स्रवति धर्मयतीति यावत् धातूनामनेकार्थत्वात् कीर्तिं तनोति । किं बहुना । किं न धत्ते किं न करोति सर्वं च करोतीत्यर्थः ॥ ७

**श्च्योतदिति** ॥ हे भगवन् श्च्योतन्मयूखे सुधास्यन्दिकरेऽपि हिमद्युतौ इन्दौ विषये न निर्वृतमनिर्वृतं नञर्थस्य नशब्दस्य सुप्सुपेति समासः । मे चक्षुः त्वत्सन्निधौ निर्वृतिं सुखमेति । तथा चेतश्च समुज्झितज्ञाति वियोगखेदं त्यक्तबन्धुविरहदुःखं उच्छ्वसितीव अनुपरोधेन प्राणितीवेत्युत्प्रेक्षा । पूर्वार्धे तु निर्वृतिकारणे सत्यपि इन्दावनिर्वृतिकथनाद्विशेषोक्तिः । तदुक्तं । श्लो । 'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत' इति ॥ ८

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निस्पृहाणाम् ।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥

इत्युक्तवानुक्तिविशेषरम्यं मनस्समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ १०

चिचीषतां जन्मवतामलघ्वीं यशोऽवतंसामुभयत्र भूतिम् ।

---

**निरास्पदमिति** ॥ प्रश्नकुतूहलित्वं निरास्पदं आगमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः । 'आस्पदं प्रतिष्ठाया'मिति निपातः । प्रश्नानवकाशे हेतुमाह—निस्पृहाणां युष्मादृशामिति शेषः । अस्मास्वधीनमस्मायत्तं किमु न किञ्चिदस्मत्तो लभ्यमित्यर्थः । आधारत्वविवक्षायां सप्तमी तथापि कल्याणकरीं अस्मद्धितैकहेतुमित्यर्थः निस्पृहप्रवृत्तेः परार्थत्वादिति भावः । कृञो हेत्विति टप्रत्यये ङीप् अतस्ते गिरं श्रोतुमिच्छा । मां मुखं वागस्यास्तीति मुखरो निरन्तरभाषी रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानमिति रप्रत्ययः । नि । 'दुर्मुखे मुखराबद्धमुखा'वित्यमरः । ततश्च्विप्रत्ययः । मुखरीकरोति व्याहारयतीत्यर्थः । निस्पृहस्यापि ते वाक्यमस्मद्धितकरत्वाच्छ्रोतव्यमिति भावः ॥ ९

**इतीति** ॥ इतीत्थं उक्तिविशेषरम्यं उक्तिवैचित्र्यचारु यथा तथा उक्तवान् उदारचेताः महामनाः नरेन्द्रः द्वैपायनेन व्यासेन द्वीपमयनं स्थानं जन्मभूमिर्यस्य न द्वीपायनः स एव द्वैपायनः प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः न त्वपत्यार्थे नडादिभ्यः फक् । तेष्वपाठात् बाधितार्थत्वाच्च जयोपपत्तौ मनस्समाधाय जयसिद्धिमुपेक्ष्येत्यर्थः । इति वक्ष्यमाणप्रकारां उदारामर्थवतीं गिरमभिदधे उक्तः । दुहादित्वादप्रधाने कर्मणि लिट् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणां । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण'इति वचनात् ॥

अव—आदौ तावत्स्वस्य माध्यस्थ्यभङ्गदोषं युग्मेन परिहरति—

**चिचीषतामिति** ॥ अलघ्वीं गुर्वीं । 'वोतो गुणवचना'दिति ङीप् यशोवतंसां कीर्तिभूषणां उभयत्र इह चामुत्र च । लोक इति शेषः । भूतं श्रेयः चिचीषतां चेतुं संग्रहीतुमिच्छतां । चिनोतेस्सन्नन्ताच्छतृप्रत्ययः जन्मवतां

अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥ ११

तथापि निघ्नं नृप तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः ।
वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः ॥ १२

सुता न यूयं किमु तस्य राज्ञस्सुयोधनं वा न गुणैरतीताः ।
यस्त्यक्तवान् वस्स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः ॥ १३

---

शरीरिणां बन्धुषु विषये तुल्यरूपा एकविधा वृत्तिर्व्यवहारः अभ्यर्हिता उचिता तपोधनानामस्मादृशां विशेषेण नियमेन अभ्यर्हिता ॥ ११

**तथापीति ॥** तथापि तुल्यवृत्त्यौचित्येपि हे नृप तावकीनैः त्वदीयैः 'युष्मदस्मदोरन्यतरस्यां खञ्' चेति खञ्प्रत्ययः । 'तवकममकावेकवचने' इति तवकादेशः । गुणौघैः प्रह्वीकृतमावर्जितं मे हृदयं निघ्नं त्वदायत्तं । नि । 'अधीनो निघ्न आयत्त' इत्यमरः । ननु निस्पृहस्य कोऽयं पक्षपात इत्यत्राह—वीतेति । वीतस्पृहाणां विरक्तानां मुक्तिभाजां मुमुक्षूणामपीत्यर्थः । भवन्तीति भव्याः साधवः भव्यगेयेत्यादिना कर्तरि निपातः । तेषु पक्षपाताः स्नेहा भवन्ति न हि साध्वनुग्रहो महतां माध्यस्थ्यभञ्जक इति भावः ॥ १२

अथ—अथ नृपस्य गुणवत्तां प्रकटयितुं धृतराष्ट्रस्य दुश्चेष्टामुद्घाटयति—

**सुता इति ॥** यूयं तस्य राज्ञो धृतराष्ट्रस्य सुता न किमु । सुता एवेत्यर्थः । गुणैः शान्तिदानदाक्षिण्यादिभिः सुयोधनं नातीताः नातिक्रान्ता वाऽतिक्रान्ता एवेत्यर्थः 'कर्तरिक्तः' असुतत्वमगुणत्वं च त्यागे हेतुः । तच्च युष्मासु नास्तीत्यर्थः । उपालम्भे कारणमाह—य इति । यः धृतराष्ट्रः वः युष्मान् त्यक्तवान् स वृथा व्यर्थजन्मेत्यर्थः । यदि वयं सुता गुणाधिकाश्च तर्हि कथमत्याक्षीत्तत्राह—बलाद्वेति । विषयाभिलाषः भोगतृष्णा बलाद्वा बलात्कारादेव । नि । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय' इति विश्वः । मोहमविवेकं विधत्ते विषयाभिलाषातिरिक्तो न कश्चिद्युष्मत्त्यागहेतुरस्तीत्यर्थः । अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १३

जहातु नैनं कथमर्थसिद्धिस्संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ १४ ॥

पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५

विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन ।

---

अव—अथ राज्ञ उत्साहवर्धनाय शत्रोर्हानिं सूचयति—

**जहात्विति ॥** एनं धृतराष्ट्रं अर्थसिद्धिः कथं न जहातु जहात्येवेत्यर्थः 'प्रैषातिसर्गप्राप्तकालेषु कृत्या'श्चेति प्राप्तकाले लोट् । तस्य हानिकालः प्राप्तइत्यर्थः । कुतः यो धृतराष्ट्रः संशय्य सन्दिह्य कर्णादिषु तिष्ठते कर्णादीन् दुर्मन्त्रिणः सन्दिग्धार्थनिर्णेतृत्वेनावलम्बत इत्यर्थः । प्रकाशनस्थेयाख्ययोश्चेति स्थेयाख्यायामात्मनेपदं । तिष्ठते तस्मिन्निति स्थेयो विवादपदनिर्णेता तथाहि असाधुयोगाः दुर्जनसंसर्गाः जयान्तरायाः जयविघातकाः किञ्च प्रमाथिनीनामुन्मूलनशीलानां विपदां पदानि स्थानानि । नि । 'पदं व्यवसितत्राणस्थान लक्ष्मांघ्रिवस्तुष्वि' त्यमरः । न केवलमर्थघातिनः किं त्वनर्थकारिणश्चेत्यर्थः धृतराष्ट्रोपि दुर्जनविधेयत्वाद्विनङ्क्ष्यतीति भावः ॥ १४

अव—एवं शत्रोरनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति—

**पथ इति ॥** रिपूणां समितौ सभायां । नि । 'सभा समिति सम्पद' इत्यमरः । पथश्च्युतायां मार्गाद्भ्रष्टायां दुरात्मनो दुश्शासनस्य स्त्रीवस्त्रग्रहणसाहसमङ्गीकृतवत्यां सत्यामित्यर्थः । चिराय धर्म्यां धर्मादनपेतां 'धर्मपथ्यर्थन्यायादनपेत' इति यत्प्रत्ययः । धुरं भारं दधानेन । कृच्छ्रेष्वपि धर्मादचलतेत्यर्थः त्वया विपत्स्वपि अविपत्ति अविनाशि अतएव रम्यं गुणेषु क्षान्त्यादिषु विषये परममुत्कटं प्रेम आविष्कृतं दुस्सहमपि सोढवता त्वया साधुकृतमिति भावः ॥

**विधायेति ॥** किञ्च शम एव एका मुख्या वृत्तिर्यस्य तस्य अपरोपतापिन इत्यर्थः । भवतः छलेन कपटेन आत्मने हितः आत्मनीनः स न भवतीत्यनात्मनीनः स्वस्यैवानर्थहेतुरित्यर्थः । तं । 'आत्मन् विश्वजनभोगोत्तरपदात्ख' इति खप्रत्ययः । विध्वंसमपकारं विधाय प्रकाशितः प्रख्यापितः त्वन्मतिशीलयोः ।

प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इति विद्विषस्ते ॥ १६

लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः ॥ १७

त्रिस्सप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः ।
वीर्यावधूतस्स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥ १८

---

तव प्रज्ञासद्वृत्तयोः सारः उत्कर्षो यैस्ते तथोक्ताः ते तव विद्विषः कृतोपकारा इव उपकृतवन्त इव । जाता इति शेषः । अपकारोऽप्युपकारायैव संवृत्तः । यस्त्वदौर्जन्यं भवत्सौजन्यं च जगति सुव्यक्तमासीदित्यर्थः । विद्यमानस्यापि सुजनस्य चान्दनदारुण इव गुणाः परिभव एव प्रचुरीभवन्तीति भावः ॥ १६

अव—अथ प्रयोजनान्तरमाह—

**लभ्येति ॥** तव त्वयेत्यर्थः । कृत्यानां कर्तरि वेति षष्ठी धरित्री विक्रमेण लभ्या प्राप्या न च सुलभा तं विनेत्याह । विपक्षश्च शत्रुरपि वीर्यं शौर्यं अस्त्राण्याग्नेयादीनि बलानि सैन्यानि तैः वीर्यास्त्रबलैः ज्यायान् प्रशस्यतरः । अधिकतर इति यावत् । ज्यचेतिप्रशस्यशब्दस्य ज्यादेशः ज्यादादीयस इत्याकारः । अतः प्रकर्षाय आधिक्याय विधिरुपायः विधेयः कर्तव्यः । कुतः हि यस्मात् रणे जयश्रीः प्रकर्षतन्त्रा प्रकर्षप्रधाना उत्कर्षायत्तेत्यर्थः । नि । 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । बलिन एव जयो न तु दुर्बलस्येति भावः ॥ १७

अव—अथ त्रिरित्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति—

**त्रिरिति ॥** त्रिरावृत्तान्सप्तवारान् त्रिस्सप्तकृत्वः एकविंशतिकृत्व- इत्यर्थः । त्रिस्सप्त शब्दयोस्सुप्सुपेति समासः । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच् प्रत्ययः । जगतीपतीनां भूपतीनां हन्ता नाशकः गुरुः । अस्त्रवेदोपदेष्टा स प्रसिद्ध इत्यर्थः । अतएव यच्छब्दोपादानानपेक्षत्वं तदुक्तं काव्यप्रकाशे 'प्रसिद्धप्रकान्तानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षत' इति जमदग्नेरपत्यं पुमान् जामदग्न्यः । गर्गादिभ्यो यञिति यञ् प्रत्ययः । यस्य भीष्मस्य वीर्यावधूतः विक्रमाभिभूतः । अम्बिकास्वयंवर इत्यर्थः । तदा भङ्ग- प्राप्तिसमये गुणानां शौर्यादीनां प्रकर्षमतिशयं आधारवशं आश्रयाधीनं विवेद

यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन् धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥

सृजन्तमाजाविषुसंहतीर्वस्सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २०

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥ २१

---

जज्ञे स्वविद्यायाः स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्षाधानदर्शनादिति भावः । स्मेति पादपूरणे । नि । 'स्म पादपूरणे भूत' इति विश्वः ॥ १८

**यस्मिन्निति ॥** यस्मिन् भीष्मे विषये अनीश्वरस्य भावः अनैश्वर्यं असामर्थ्यं नञश्शुचीश्वरक्षत्रज्ञकुशलनिपुणानामिति विकल्पान्नञः पूर्वपदवृद्ध्यभावः । तेन कृतव्यलीकः जनितवैलक्ष्यः । नि । 'दुःखे वैलक्ष्ये व्यलीक' मिति यादवः । अन्तको यमोपि पराभवं प्राप्त इव भीष्मस्येच्छामरणत्वात् । अन्तकोपि पराजित इवास्ते किमुतान्य इति भावः । स भीष्मो रणे धनुः धुन्वन् कम्पयन् कस्य मनः भयैकप्रवणं भये एकप्रवणमेकोन्मुखं शिवभागवतवत्समासः । न कुर्यात् । सर्वस्यापि मनसि भयं कुर्यादेवेत्यर्थः ॥ १९

**सृजन्तमिति ॥** आजौ रणे इषुसंहतीः बाणसङ्घान् सृजन्तं वर्षन्तं कोपज्वलितं अतएव परिस्फुरन्त्यो लोलाश्च शिखाग्राण्येव जिह्वा यस्य तं तथोक्तं जगत् लोकं जिघत्सन्तं अत्तुमिच्छन्तम् । अदेस्सन्नन्ताच्छतृप्रत्ययः लुङ्सनोर्घस्लृ इति घस्लादेशः । अन्तवह्निं कालाग्निमिव स्थितं गुरुं द्रोणं वो युष्माकं मध्ये कस्सहेत सोढुं शक्नुयात् न कोपीत्यर्थः । शकि लिङ्चेति शक्यार्थे लिङ् ॥२०

**निरीक्ष्येति ॥** संरम्भेण कोपेन निरस्तं त्याजितं धैर्यं निर्विकारचित्तत्वं येन तं । तथोक्तं आटोपेनैव परधैर्यापहारिणमित्यर्थः । आराधितजामदग्न्यं शुश्रूषितभार्गवं जामदग्न्यादधिगताखिलास्त्ररहस्यमित्यर्थः । राधेयं राधासुतं कर्णम् । स्त्रीभ्यो ढगिति ढक्प्रत्ययः । निरीक्ष्य मृत्योरपि असंस्तुतेषु । नि । 'संस्तवस्स्यात्परिचय' इत्यमरः । भयेषु प्रसभं पक्षपातः परिचयः जायेत मृत्युरप्यस्माद्बिभीयात् किमुतान्य इति भावः । सम्भावनायां लिङ् अत्र जनिक्रियापेक्षया

यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम् ।
एते दुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन ॥ २२

महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप देवतानां ।
दातुं प्रदानोचितभूरिधाम्नीमुपागतस्सिद्धिमिवास्मि विद्याम् ॥ २३॥

इत्युक्तवन्तं व्रज साधयेति प्रमाणयन्वाक्यमजातशत्रोः ।
प्रसेदिवांसं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥ २४

---

समानकर्तृकत्वाभावेऽपि पक्षपातक्रियापेक्षया तत्सम्भवान्निरीक्ष्येति ल्यन्निर्देश-स्समर्थनीयः प्रधानोपसर्जनभावस्त्वप्रयोजक इति व्यक्तिविवेककारः। अत्र भय-सम्बन्धरहितस्य मृत्योर्भयसम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्ति-रलङ्कारः ॥ २१

**ययेत्यादि ॥** यया विद्यया करणेन सुदुश्चरामतिदुष्करां तपस्यां तपश्चर्याम् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरो'रिति क्यङ् । अप्रत्ययादिति स्त्रियामप्रत्ययः। आचरता पशुपतिं प्रति तपः कुर्वतेत्यर्थः। अतएव समासादितं साधनं पाशुपतास्त्ररूपं येन तेन कपिर्हनूमान् केतनं चिह्नं यस्य तेन अर्जुनेनेत्यर्थः। दुरापं अन्यदुर्लभं वीर्यं तेजस्समवाप्य एते पूर्वोक्ता भीष्मादयः उन्मूलितारः उन्मूलयिष्यन्ते'। उन्मूलयतेर्ण्यन्तात्कर्मणि लुट् । अत्र चिण्वदिडागमेऽपि तस्य असिद्धवदत्राभादित्यसिद्धत्वात् णेरनिटीति णिलोपः । वलिनिमित्तस्यैवानिटीति प्रतिषेधात् । तदुक्तं। 'चिण्वद्वृद्धिर्युक्चहन्तेश्च घत्वं नीर्मश्चोक्तो यो मितां वाचि णीति। इट्चासिद्धस्तेन मे लुप्यतेणिर्नित्यश्चायं वलनिमित्तो विघाती'ति ॥ २२

**महत्त्वेति ॥** हे नृप महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नां महानु-भावानां देवतानामिन्द्रादीनां आराध्यतेऽनयेत्याराधनी। तां प्रसादयित्रीमित्यर्थः। "करणे ल्युट् ङीप् भूरिधाम्नीं महाप्रभावां। धाम 'धाम देशे गृहे रश्मौ स्थाने जन्मप्रभावयो'रिति विश्वः 'अनउपधालोपिनोन्यतरस्या'मिति ङीप् । विद्यामे-न्द्रमन्त्ररूपां सिद्धिं साक्षात्कार्यसिद्धिमिवेति विद्याया अमोघत्वोक्तिः। हे प्रदानोचित दानपात्रभूत। फलभोक्तृत्वादस्य पात्रत्वोक्तिः। दातुमुपागतोऽस्मि ॥

**इतीति ॥** इत्युक्तवन्तं प्रसेदिवांसं प्रसन्नं 'भाषायां सदवसश्रुव' इति क्वसुः। तं मुनिं जिष्णुः जयशीलोऽर्जुनः 'ग्लाजिस्थश्चग्स्नु'रिति ग्स्नुप्रत्ययः। व्रज

निर्याय विद्याथ दिनादिरम्याद्बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता दीप्तिस्स्फुरत्पद्ममिवाभिपेदे ॥ २५

योगं च तं योग्यतमाय तस्मै तपःप्रभावाद्वितितार सद्यः ।
येनास्य तत्त्वेषु कृतेवभासे समुन्मिमीलेव चिराय चक्षुः ॥ २६

आकारमाशासितभूरिलाभं दधानमन्तः करणानुरूपं ।

---

साधय अनुतिष्ठेत्येव रूपं अजातशत्रोः धर्मराजस्य । स्वयमविद्वेषशीलत्वादियं संज्ञा वाक्यं प्रमाणयन् तदादिष्टस्सन्नित्यर्थः । अन्ते वसन् छात्र इव । नि । 'छात्रान्तेवासिनौ शिष्य' इत्यमरः । विनयेन अनौद्धत्येन उपाससाद समीपं प्राप ॥ २४

**निर्यायेति ॥** अथ वह्निकणावदाता स्फुलिङ्गवदुज्ज्वला देवतासान्निध्यादिति भावः । विद्या ऐन्द्रमन्त्ररूपा दिनादिरम्यात् प्रभातभास्वरात् अर्कस्य बिम्बादिव महर्षेः व्यासस्य मुखात् निर्याय निर्गत्य निर् पूर्वाद्यातेः क्त्वायां । समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यबादेशः । दीप्तिरर्कदीधितिः स्फुरद्विकसत् पद्ममिव पार्थाननमर्जुनस्य मुखं अभिपेदे प्रविष्टा ॥ २५

**योगं चेति ॥** व्यासः योग्यतमाय अर्हतमाय तस्मै पार्थाय तं वक्ष्यमाणमहिमानं योगं ध्यानविधिं च । नि । 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिष्वि'त्यमरः । तपः प्रभावात् सद्यो वितितार ददौ । चिरकालग्राह्यमपीति भावः । येन योगेन । तत्त्वानि प्रकृतिमहदादीनि तानि यथा मूलप्रकृतिर्महानहङ्कारो मनश्च पञ्चतन्मात्राणि पञ्चबुद्धीन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्चमहाभूतानीति चतुर्विंशतितत्त्वानीति तत्र अवभासे साक्षात्कारे कृते सति अस्यार्जुनस्य चक्षुरक्षि चिराय समुन्मिमीलेव उन्मिषितमिवेत्युत्प्रेक्षा । तदा तस्य कोपि महानखिलाज्ञानभञ्जनस्तत्त्वावभासश्चिरादन्धस्य दृष्टिलाभ इवाभवदिति भावः ॥ २६

**आकारमिति ॥** आशंसितः आख्यातो भूरिलाभोनेकश्रेयःप्राप्तिर्येन तं तथोक्तं महाभाग्यसूचकमित्यर्थः । अन्तःकरणशब्देन तद्वृत्तिरुत्साहो लक्ष्यते तदनुरूपं तदनुकूलं उत्साहानुगुणव्यापारक्षममित्यर्थः । आकारं मूर्तिं दधानं तं

नियोजयिष्यन्विजयोदये तं तपस्समाधौ मुनिरित्युवाच ॥ २७

अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८

करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥ २९ ॥

इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे ।
तं राजराजानुचरोऽस्य सद्यः प्रदेशमादेश इवाधितष्ठौ ॥ ३०

---

अर्जुनं मुनिः विजयोदये विजयफलके तपस्समाधौ तपोनियमे । नि । 'समाधिर्नियमे ध्याने मौने चैव समर्थन' इति विश्वः । नियोजयिष्यन् नियोक्तुमिच्छन्नित्यर्थः । लृट् शेषे चेति लृट् लटस्सद्वेति शत्रादेशः इति वक्ष्यमाणमुवाच ॥

**अनेनेति:॥** अनेन स्वोपदिष्टेनेत्यर्थः । योगेन विवृद्धतेजाः अधिकप्रतापो वा निजां पदवीं परस्मै अयच्छन् परस्य प्रवेशमददानइत्यर्थः । उपात्तशस्त्रः गृहीतायुध एव सन् जपोपवासाभिषवैः स्वाध्यायानशनस्नानैः मुनीनामाचारं समाचर अनुतिष्ठ ॥ २८

अव—क्षेत्रविशेषे तपस्सिद्धिरित्याशयेन तं निदर्शयन्नाह—

**करिष्यस इति ॥** यत्र शिलोच्चये गोत्रभिदः इन्द्रस्य प्रसत्तये प्रसादाय सुदुश्चराणि तपांसि करिष्यसे चारुशिलोच्चयं रम्यशिखरं तं शिलोच्चयं गिरिं इन्द्रकीलाख्यं । नि । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया' इत्यमरः । एष गुह्यको यक्षः अन्तरमेवास्य पुरः प्रादुर्भावादेष इति निर्देशः । क्षणान्नेष्यति प्रापयिष्यति ॥ २९

**इतीति ॥** इतीत्थं महेन्द्रसूनुमर्जुनं ब्रुवाणेन उक्तवतेत्यर्थः 'वर्तमानसामीप्येवर्तमानद्वा' इति भूते वर्तमानवत्प्रत्ययस्तिरोधानस्याविलम्बसूचनार्थः । तेन महर्षिणा व्यासेन तिरोबभूवे अन्तर्दधे । भावे लिट् । राजराजो यक्षराजः । नि । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो' रिति विश्वः । तस्यानुचरः यक्षः पूर्वोक्तः अस्य मुनेः आदेशः साक्षादाज्ञेव सद्यः तं अर्जुनाधिष्ठितं प्रदेशं अधितष्ठौ प्राप्त इत्यर्थः । 'स्यादिष्वभ्यासे न चाभ्यासस्ये'ति षत्वम् ॥ ३०

कृतानतिर्व्याहृतसांत्ववादे जातस्पृहः पुण्यजनस्स जिष्णौ ।
इयाय सख्याविव सम्प्रसादं विश्वासयत्याशु सतां हि योगः ॥ ३१॥
अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं तमश्शनैः पाण्डुसुतान् प्रपेदे ॥ ३२॥
असंशयालोचितकार्यनुन्नः प्रेम्णा समानीय विभज्यमानः ।

---

**कृतेति ॥** स पुण्यजनो यक्षः कृतानतिः कृतप्रणामस्सन् व्याहृतः उक्तस्सांत्ववादः प्रियवचनं येन तस्मिन् । नि । 'व्याहार उक्ति र्लपित' मित्यमरः। जिष्णावर्जुने जातस्पृहो जातानुरागस्सन् सख्यौ सुहृदीव । नि । 'अथ सिवं सखा सुहृ'दित्यमरः । सम्प्रसादं विस्रम्भं इयाय प्राप । तथाहि सतां साधूनां योगः सङ्गतिः आशु विश्वासयति विश्वासं जनयति सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ३१

**अथेति ॥** अथ उष्णभासा सूर्येण उदयाय पुनरुद्गमाय विहीयमानान् त्यज्यमानानिति तमः प्राप्तिकारणोक्तिः बृहद्द्युतीन् सौवर्णत्वाद्दीप्यमानानिति तमस्सङ्कोचकारणोक्तिः सुमेरुकुञ्जानिव अत्र सुमेरुग्रहणं कुञ्जानां सौवर्णत्वद्योतनार्थं तेन अर्जुनेन उदयाय श्रेयसे विहीयमानान् बृहद्द्युतीन् अधिकबुद्धि-प्रकाशान् पूर्ववद्विशेषणद्वयस्य प्रयोजनमनुसन्धेयं पाण्डुसुतान् चतुर इति शेषः। दुःखेन कृच्छ्रेण कृत उपपादितः आत्मलाभः उत्पत्तिर्यस्य तत्तथोक्तं तेषां विवेकित्वात्कथञ्चिल्लब्धोदयमित्यर्थः । तमश्शोकोन्धकारश्च । नि । 'तमोन्धकारे स्वर्भानौ तमश्शोके गुणान्तर' इत्युभयत्रापि विश्वः । शनैर्मन्दं प्रपेदे । तेषां विवेकित्वाद्भीतभीतमिवेति भावः । अत्र तमश्शब्दस्य श्लिष्टत्वाच्छ्लेषानुप्राणितेयमुपमा ॥ ३२

**असंशयेति ॥** असंशयमसंदिग्धं यथा तथा आलोचितं विवेचितं यत्कार्यं तेन नुन्नो निरस्त इति लघुत्वहेतूक्तिः । 'नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्या'मिति निष्ठानत्वं कार्यगौरवमालोच्य निरस्त इत्यर्थः । तथापि प्रेम्णा भ्रातृवात्सल्येन कर्त्रा समानीय पुनराकृष्य विभज्यमानः समशोकभागी

तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारोपि लघुस्स मेने ॥ ३३

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनस्स तेषु न स्थानमवाप शोकः ॥ ३४

तान् भूरिधाम्नश्चतुरोपि दूरं विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म कृष्णां विभावरीं ध्वान्तमिव प्रपेदे ॥ ३५

---

क्रियमाणः तुल्येन प्रेम्णा तुल्यदुःखत्वं भवतीति भावः । न पूर्वोक्तः दुःखमेवातिभारो दुःखातिभारोपि अतिभारभूतमतिदुःखमित्यर्थः । तन्मनोभिः तेषां चतुर्णां पार्थानां मनोभिः तुल्याद्विभागादिव पूर्वोक्तात्प्रेमकृतात् समविभागादिवेत्यर्थः । वस्तुतस्तु विवेकादेवेति भावः । पुनर्विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थमनुवाद इत्यदोषः । लघुः मेने मतः यथैकोऽनेकधा विभज्य बहुभिरुह्यमानो महानपि भारो लघुर्मन्यते तद्वदित्यर्थः ॥ ३३

अव—अथैवं प्रेम्णा आकृष्यमाणमपि शोकं विवेको निर्जिगायेत्याह—

**धैर्येणेति** ॥ धैर्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेः व्यासस्य प्रवर्तकस्येति शेषः । विश्वास्यतया श्रद्धेयवचनत्वेनेत्यर्थः । अरातिप्रभवादरातिहेतुकात् तीव्राद्दुस्सहात् मन्योः क्रोधाच्च हेतोः तथार्जुनप्रभावपरिज्ञानाच्चेति हेत्वन्तरं विशेषणमुखेनाह—मघोनस्सुते अर्जुने वीर्यं च । न लोकेत्यादिना षष्ठीप्रतिषेधः । विद्वत्सु ज्ञातवत्स्विति यावत् । विदेश्शतुर्वसुरिति वैकल्पिको वस्वादेशः । तेषु पार्थेषु शोकः स्थानं स्थितिं नावाप न प्राप ॥ ३४

**तानिति** ॥ तत् पार्थत्यागजनितं शर्म सुखं तद्विरुद्धं अशर्म दुःखम् । नञिति नञ् समासः भूरिधाम्नः अतितेजस्विन इति हानिहेतूक्तिः । चतुरः तान् पार्थानपि वासरस्य भूरिधाम्नश्चतुरो यामान् प्रहरानिव दूरं विहाय त्यक्त्वा एकौघभूतं एकराशिभूतं सत् । श्रेण्यादयः कृतादिभिरिति च्व्यर्थे कर्मधारयः । श्रेण्यादिराकृतिगण इति शाकटायनः । कृष्णां विभावरीं कृष्णपक्षरात्रिं ध्वान्तमिव कृष्णां द्रौपदीं प्रपेदे प्राप ॥ ३५

तुषारलेखाकुलितोत्पलाभे पर्यश्रुणी मङ्गळभङ्गभीरुः ।
अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे ॥ ३६

अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टं ।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७

---

**तुषारेति ॥** सा द्रौपदी विलोकने अर्जुनावलोकने अगूढभावा-अगूढाभिप्रायापि स्फुटाभिलाषिणीति यावत् । नि । 'भावो लीला क्रिया चेष्टा-भूत्यभिप्रायजन्तुष्वि'ति वैजयन्ती । मङ्गळभङ्गभीरुः मङ्गळहानेर्भीता सती पर्यश्रुणी परिगताश्रुके बाष्पावृते इत्यर्थः । अत एव तुषारलेखाकुलितोत्पलाभे हिमबिन्दु-परीतेन्दीवरसन्निभे इत्युपमालङ्कारः । लोचने मीलयितुं न विषेहे न शशाक । अश्रुणो दृष्ट्यावारकत्वेपि तन्निपातस्यामङ्गळत्वात्तन्निर्वर्तकं निमीलनं हि न चकारे-त्यर्थः ॥ ३६

**अकृत्रिमेति ॥** इन्द्रसूनुरर्जुनः ॥ क्रियया निर्वृत्तः कृत्रिमः । 'ड्वितः क्त्रि'रिति क्त्रिः । 'क्त्रेर्मम् नित्य'मिति मप्प्रत्ययः । तद्विरुद्धः अकृत्रिमः प्रेमैव रसः । प्रेमरसः अकृत्रिमेण प्रेमरसेन अभिरामं अन्यत्र प्रेम्णा रसेन मधुरादिना चाभि-रामं रामया रमण्या अर्पितं दृष्टिं विलोभयतीति दृष्टिविलोभि दृष्टिप्रियमित्यर्थः । दृष्टं दर्शनम् । नपुंसके भावे क्तः मनःप्रसादः प्रसन्नं मन इत्यर्थः । † सोऽञ्जलि-रिवेत्युपमितिसमासः तेन मनःप्रसादाञ्जलिना पथि साधु पाथेयं सम्बळमिव । 'पथ्यतिथिवसतिस्वपतेर्ढञ् '। निकाममतिशयेन जग्राह रामार्पितं पाथेयं पथि क्षेमाय भवतीत्यागमः ॥ ३७

---

† कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायादिति भावः । अस्य च न्यायस्यायमर्थः । कृदभिहितः कृता कृत्प्रत्ययेन अभिहितोऽभिधीयमानो भावः धात्वर्थः द्रव्यवत् । सप्तम्यन्ताद्वतिः स्वाश्रय इवेत्यर्थः । स्वाश्रयबोध्यमान इवेति यावत् । तथा च कृद्बोध्यमानो धात्वर्थस्स्वाश्रयविशेषणतयापि प्रकाशत इति केचित्तु द्रव्यवत् द्रव्येण तुल्यं द्रव्यवत् स्वाश्रयवदित्यर्थः । तथा च भावार्थकः । भावाश्रयवाचको भवतीति फलितमित्याहुः ॥

धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८

मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन् ।
अधिद्विषामातपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः ॥ ३९

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
अनुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४०

---

**धैर्येति** ॥ वन्यद्विपेन वन्यग्रहणमुच्छृङ्खलत्वद्योतनार्थं निदाघसिन्धुः ग्रीष्मकालनदीव निदाघग्रहणं दौर्बल्यद्योतनार्थं धैर्यावसादेन धैर्यभ्रंशेन कर्त्रा हृतप्रसादा हृतनैर्मल्या क्षोभं गमितेत्यर्थः । राजपुत्री क्षत्रियसुता द्रौपदी अतः क्षात्रयुक्तमेव वक्ष्यतीति भावः । निरुद्धबाष्पोदयं संरुद्धरोदनं सन्नकण्ठं हीनकण्ठ-स्वरं । अथ तयोरुभयोः कृतबहुव्रीह्योः क्रियाविशेषणयोर्विशेषणसमासः । कृच्छ्रा-त्कथंचित् इति वक्ष्यमाणमुवाच ॥ ३८

**मग्नामिति** ॥ पङ्कभूते पङ्कोपमिते । नि । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयो' रिति विश्वः । द्विषच्छद्मनि शत्रुकपटे मग्नां दुरुद्धरामिति भावः । सम्भावनां योग्यतां गौरवमिति यावत् । भूतिं सम्पदमिव । नि । 'भूति-र्भस्मनि सम्पदी' त्यमरः । उद्धरिष्यन् उद्धारकः त्वमिति शेषः । आधिद्विषां दुःखच्छिदां तपसां आप्रसिद्धेस्सम्यक्सिद्धिपर्यन्तं अस्मद्विना अस्माभिर्विनेत्यर्थः । पृथग्विनेत्यादिना विकल्पात्पञ्चमी । भृशं मोन्मनीभूः अस्मद्विरहाद्दुर्मना माभू-रित्यर्थः । दौर्मनस्यस्य तपःपरिपन्थित्वादिति भावः । माङि लुङित्याशीरर्थे लुङ् न माङ्योग इत्यडागमप्रतिषेधः अनुन्मना उन्मनास्सम्पद्यमानः भवति उन्मनी । 'अभूततद्भावे च्विः अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चे'ति सकारलोपः । अस्यच्वावितीकारः ॥ ३९

अव—अथानौत्सुक्यदार्ढ्यार्थं तस्य सर्वार्थसिद्धिनिदानत्वमाह—

**यश इति** ॥ यशोऽधिगन्तुं कीर्तिं लब्धुं वेति शेषः । सुखस्य लिप्सया लब्धुमिच्छया वा मनुष्यसंख्यां मनुष्येषु गणनां अतिवर्तितुमतिक्रमितुं वा अमानुषं कर्म कर्तुं वेत्यर्थः । अभियोगभाजां अभिनिवेशवतां अनुत्सुकानां दुर्म-

लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन् वसु जैत्रमोजः ।
तेजस्विताया विजयैकवृत्तेर्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ ४१

व्रीडानतैराप्तजनोपनीतस्संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।

---

नायमानानामित्यर्थः । सिद्धिः पूर्वोक्तयशस्सुखाद्यर्थसिद्धिः समुत्सुकेव अनुरक्तकान्तेव अङ्कमुत्सङ्गमन्तिकं चोपैति तस्मादस्मद्विरहदुःखमातपस्सिद्धेस्सोढव्यमिति भावः ॥ ४०

अव—अथास्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिं द्रढयितुमरिनिकारं तावच्चतुर्भिरुद्घाटयति—

**लोकमिति ॥** विधात्रा ब्रह्मणा लोकं गोप्तुं रक्षितुं विहितस्य सृष्टस्य क्षत्रस्य क्षत्रियजातेस्सम्बन्धि जयशीलं जेतृ तदेव जैत्रं जेतृशब्दात्तृन्नन्तात् प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः । ओजो बलं दीप्तिर्वा । नि । 'ओजो बले च दीप्तौ च' ति विश्वः । तदेव वसु धनमिति रूपकालङ्कारः मुष्णन् अपहरन् अरिनिकृतस्य कुतः क्षात्रं तेज इति भावः । किञ्च विजयैकवृत्तेः विजयैकजीवनायाः क्षत्रियस्य विजितमिति स्मरणादिति भावः । नि । 'वृत्तिर्वर्तनजीवने' इत्यमरः । तेजस्वितायाः तेजस्विनामित्यर्थः । तेजसः प्राधान्यद्योतनार्थं भावप्रधानो निर्देशः । प्रियं प्राणमिव प्राणसममित्यर्थः । अभिमानमहंकारं निघ्नन् खण्डयन् तेजस्विनां प्राणहानिप्राया मानहानिरिति भावः । श्लो । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपी' त्याहुः ॥ ‡ ४१

**व्रीडेति ॥** पुनश्च । आप्तजनोपनीतः श्रावित इत्यर्थः । तथापि संशय्य कथमेवं सम्भाव्यत इति सन्दिह्य व्रीडानतैः जुगुप्सितवृत्तान्तश्रवणादिति भावः । नृपैः देशान्तरस्थैः कृच्छ्रेण प्रपन्नः प्राप्तः आप्तोक्तत्वात्कथञ्चिद्विश्वस्त इत्यर्थः । शृण्वतामपि दुस्सहः किमुतानुभवतामिति भावः । इत्येषा पूर्वेषां व्याख्या अन्यथा च व्याख्यायते आप्तजनोपनीतो ज्ञातिकृतः संशय्य कथमिदमन्याय्यमुपेक्ष्यमिति विचार्य व्रीडानतैर्जुगुप्सितकर्मदर्शनादिति भावः । नृपैः सभास्थै

---

‡ 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजस्समुदाहृत' मित्यपि बोध्यम् ॥

वितानभूतं विततं पृथिव्यां यशस्समूहन्निव दिग्विकीर्णम् ॥ ४२

वीर्यापदानेषु कृतावमर्शस्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्वन् प्रयाममक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३

प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्तुं न शक्यः किमुताधिकर्तुं ।
नवीकरिष्यत्युपशुष्यदार्द्रस्स त्वद्विना मे हृदयं निकारः ॥ ४४

---

कृच्छ्रेण प्रपन्नः अङ्गीकृतः गोत्रकलहेषु मध्यस्थैरुदासितव्यमिति बुद्ध्या उपेक्षित इत्यर्थः । पक्षद्वयेपि प्रपन्न इत्यत्र आप्तजनोपनीतत्वस्य पदार्थभूतस्य विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः । पुनश्च पृथिव्यां वितानभूतमुल्लोचतुल्यम् । नि । 'अस्त्री वितानमुल्लोच' इति । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वि'ति चामरः । दिग्विकीर्णं दिगन्तलग्नं । वितानमपि दिगन्तलग्नमिति भावः । विततं विस्तृतं । नि । 'विततं विस्तृतं तत'मित्यमरः । प्रथितमिति पाठे प्रसिद्धं यशस्समूहन्निव सङ्कोचयन्निवेत्युत्प्रेक्षा । अरातिपरिभूतस्य कुतः कीर्तिरिति भावः ॥ ४२

**वीर्येति** ॥ पुनश्च । वीर्याण्येवापदानानि तेषु कृतावमर्शः कृतास्कन्दनः पुराकृतपराक्रमोद्भूतान्यपि प्रमृजन्नित्यर्थः । नि । 'अपदानं कर्म वृत्तमि'त्यमरः । अतएव सम्प्रतीतिं प्रख्यातिं । नि । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता'इत्यमरः । अभूतामविद्यमानामिवेति सत्या अप्यसत्त्वमुत्प्रेक्ष्यते तन्वन्न कुर्वन् पुनश्च अह्नोऽवशेषो दिनान्तः । अर्कत्विषामिवायतीनामुत्तरकालानां प्रयाममक्षयं दैर्घ्यनाशं कुर्वन्निति श्रौती पूर्णेयमुपमा । अरिनिराकृतस्य कुतश्चिरावस्थानमिति भावः ॥ ४३

**प्रसह्येति** ॥ पुनश्च परैः शत्रुभिः अस्मासु प्रसह्य प्रयुक्तः आचरितः यो निकारः परिभवः केशाम्बराकर्षणरूपः स्मर्तुं न शक्यः अधिकर्तुमनुभवितुं किमुत यस्य स्मरणमपि दुस्सहं तस्यानुभवस्तु दुस्सह इति किमु वक्तव्यमित्यर्थः । सः निकारः त्वद्विना त्वया विना । पृथग्विनेत्यादिना पञ्चमी आर्द्रस्सन् । कुतश्चिदभिघातात्पुराणप्रहार इव त्वद्विरहदुःखात्पुनर्नवीभवन्नित्यर्थः । उपशुष्यत् । न त्वद्यापि शुष्कमिति भावः । दुःखस्तम्भनं शोषपदार्थः मे हृदयं नवीकरिष्यति आर्द्रीकरिष्यति । व्रणमिवेति भावः । दुःखितस्य पुनर्दुःखोदयः प्रशान्तप्रायमपि

प्राप्तोभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारं ।
द्विषत्प्रतापान्तरितोरुतेजाश्शरद्घनाकीर्ण इवादिरह्नः ।। ४५

सव्रीडमन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमानः ।
यशः क्षयात्क्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ।। ४६

दुश्शासनाकर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः ।

---

दुःखहेतुं पुनरुद्घाटयतीत्यर्थः। अत्र शोषादिविशेषणमात्रसाम्याद्व्रणाद्यप्रस्तुतार्थप्रतीतेस्समासोक्तिरलङ्कारः ॥ ४४

अव—पुनः प्रकारान्तरेण मन्युमुद्दीपयति प्राप्त इत्यादिभिस्त्रिभिः—

**प्राप्तेति ।।** अभिमानस्य व्यसनात् भ्रंशात्। नि। 'व्यसनं विपदि भ्रंशे दोषे कामजकोपज' इत्यमरः। दन्तव्यसनात् दन्तभंगात् दन्तीवासह्यं विकारं वैरूप्यं प्राप्तः ततो न प्रत्यभिज्ञायस इति भावः। एवमुत्तरत्राप्यनुसन्धेयं पुनश्च द्विषत्प्रतापेन शत्रुतेजसा अन्तरितं तिरस्कृतं उरुतेजः प्रतापो यस्य स तथोक्तः। अतएव शरद्घनाकीर्णः शरन्मेघच्छन्नः अह्न आदिः प्रत्यूष इव स्थितः तद्वदेवाप्रत्यभिज्ञायमान इत्यर्थः। मध्याह्नस्तु मेघावरणेपि कथंचित्प्रत्यभिज्ञायत एवेत्याशयेनोक्तमादिरिति ॥ ४५

**सव्रीडेति ।।** पुनश्च निष्क्रियत्वादर्थक्रियाशून्यत्वात् सव्रीडमन्दैरिव सव्रीडैरतएव मन्दैरपटुभिरिव स्थितैरित्युत्प्रेक्षा। नि। 'मूढाल्पापटुनिर्भाग्या मन्दा' इत्यमरः। अस्त्रैरत्यर्थं नावभासमानः न प्रकाशमानः पूर्वं तु नैवमिति भावः। किञ्च यशःक्षयाद्धेतोः क्षीणजलो योर्णवः तदाभः तत्सदृशः त्वं अन्यमाकारं अभिपन्नः प्राप्त इव स्थित इत्युत्प्रेक्षा। तस्याश्च क्षीणजलार्णवाभइत्युपमया संसृष्टिः ॥ ४६

**दुश्शासनेति ।।** पुनश्च दुश्शानस्य कर्तुः आकर्षः आकर्षणं सएव रजो धूलिः। मालिन्यहेतुत्वादिति भावः। तेन विकीर्णैर्विक्षिप्तैः अतएव विनाथैरिव स्थितवतां युष्माकमसत्प्रायत्वादनाथैरिव स्थितैरित्युत्प्रेक्षा अन्यथा कथमियं दुर्दशेति भावः। किन्तु भाग्यनाथैः दैवमात्रशरणैः अन्यथा स्वरूपमपि लुप्येतेति

केशैः कदर्थीकृतवीर्यसारः कच्चित्सएवासि धनञ्जयस्त्वम् ॥ ४७

स क्षत्त्रियस्त्राणसहस्सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः ।
वहन् द्वयीमप्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८

वीतौजसस्सन्निधिमात्रशेषा भवत्कृतां भूतिमपेक्षमाणाः ।
समानदुःखा इव नस्त्वदीयास्सरूपतां पार्थ गुणा भजन्ते ॥ ४९

---

भावः । एभिः परिदृश्यमानैः असंयतैरिति भावः । केशैः शिरोरुहैः कुत्सितः अर्थः वस्तु कदर्थः । नि । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'त्यमरः कोः कत्तत्पुरुषे चीति कुशब्दस्य कदादेशः कदर्थीकृतौ गर्ह्यार्थीकृतौ वीर्यसारौ शौर्यबले यस्य स तथोक्तः । इत्थं पूर्वविलक्षणस्त्वं सः पूर्व एव धनञ्जयोसि कच्चित् । नि । 'कच्चित्कामप्रवेदन' इत्यमरः । स एव चेन्नैवमस्मानुपेक्षस इति भावः ॥ ४७

अव—अथाप्युपेक्षणे दोषमाह—

**स इति ॥** क्षतात् त्रायत इति क्षत्त्रं क्षत्त्रियकुलं सुपीतियोगविभागात्कप्रत्ययः । पृषोदरादित्वात्पूर्वपदस्यान्त्यलोपः । अथवा क्षदिति क्विबन्तोपपदात्कप्रत्ययः क्षत्रे जातः क्षत्रियः क्षत्राद्घ इति घप्रत्ययः । कर्मणे प्रभवतीति कार्मुकं 'कर्मण उकञि'त्युकञ् प्रत्ययः । एवं स्थिते वाक्यार्थः कथ्यते । यस्सतां साधूनां । सहत इति सहः पचाद्यच् त्राणस्य सहः त्राणसहो रक्षणक्षमां स एव क्षत्रियः क्षत्रियशब्दवाच्यः तथा यस्य कार्मुकस्य कर्मसु रणक्रियासु शक्तिः अस्तीति शेषः तदेव कार्मुकं कार्मुकशब्दवाच्यं अत्रैवैतौ शब्दौ मुख्यौ नान्यत्रेति भावः । एवं स्थिते द्वयीं द्विविधां उक्तिमपि द्वावपीमौ क्षत्रियकार्मुकशब्दावित्यर्थः अफले पूर्वोक्तावयवार्थशून्ये इत्यर्थः । अर्थजाते स्वाभिधेयसामान्ये जातिमात्र इत्यर्थः । नि । 'जातं जात्योघजन्मस्वि'ति विश्वः । वहन् प्रवर्तयन् असंस्कारहतां अव्युत्पत्तिदूषितामिव करोतीत्युत्प्रेक्षा । तस्मात्त्वमप्यसद्रक्षणेनोक्तदोषादात्मानं मोचयस्वेत्यर्थः ॥ ४८

**वीतौजस इति ॥** हेपार्थ वीतौजसः निष्प्रभावाः सन्निधिमात्रशेषाः सत्तामात्रावशिष्टाः भवत्कृतां भवता करिष्यमाणां 'आशंसायां भूतव'च्चेति भूतवत्प्रत्ययः । भूतिमभ्युदयमपेक्षमाणाः त्वदीया गुणाः समानदुःखाः समदुःखभाज इव नोस्माकं सरूपतां वीतौजस्त्वादिसाधर्म्यं भजन्त इत्युपमा । सा च समानदुःखा इवेत्युत्प्रेक्षया वीतौजस्त्वादिसम्भावितयानुप्राणितेत्यनुसन्धेयम् ॥ ४९

आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरिवाल्नसटं मृगेन्द्रं ।
त्वां धूरियं योग्यतयाधिरूढा दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥

करोति (यश्शेष) योऽशेषजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥ ५१

प्रियेषु यैः पार्थ विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः ।

---

अव—तथापि ममैव कोयं भार इत्यत्राह—

**आक्षिप्यमाणमिति ॥** प्रमादात् प्रज्ञाहैन्यात् न तु दौर्बल्यादिति भावः । रिपुभिः आक्षिप्यमाणं अधिक्षिप्यमाणं अतएव प्रमादात् नागैर्गजैः । नि । 'गजेपि नागमातङ्गा' वित्यमरः । आलूनसटमुत्क्षिप्तकेसरं । नि । 'सटा जटा केसरयो'रिति विश्वः । मृगेन्द्रं सिंहमिव स्थितं त्वां इयं धूः कार्यभारः तिग्मरश्मि सूर्यं दीप्त्या दिनश्रीरिव योग्यतया निर्वाहकतयेत्यर्थः । अधिरूढा आरूढवती कर्तरि क्तः त्वदधीनेत्यर्थः ॥ ५०

अव—पूर्वं निर्व्यवसायस्य स क्षत्रिय इत्यादिना दोष उक्तः सम्प्रति व्यवसायिनो गुणमाह—

**करोतीति ॥** यः पुमान् शेषजनादितरजनात् अतिरिक्तां अधिकां सर्वातिशायिनीमित्यर्थः । सम्भावनां योग्यतां क्रियाभिः चरितैः अर्थवतीं सफलां करोति तं पुमांसं संसत्सु सभासु । नि । 'सभा समिति संस' दित्यमरः । पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति पूर्यतेऽनयेति पूरणी संख्या द्वित्वादिसंख्या न समुपैति न गच्छति अद्वितीयो भवतीत्यर्थः । तस्मादसाधारण्यलाभाय त्वयापि महानुत्साह आस्थेय इति भावः ॥ ५१

अव—अथ द्वाभ्यां सुलभचित्तविक्षेपस्य प्रोषितस्यार्जुनस्य कर्तव्यमुपदिशति—

**प्रियेष्विति ॥** हेपार्थ प्रियेष्वस्मासु विषये उपपत्तेः कारणाद्विनैव । विचिन्त्यमानैः । अकस्मादेवाशङ्क्यमानैः यैः अघैः चेतः क्लमं खेदमेति । जयाय

तव प्रयातस्य जयाय तेषां क्रियादघानां मघवा विघातम् ॥ ५२

मागाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेपि देशे ।
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि ॥

तदाशु कुर्वन् वचनं महर्षेर्मनोरथान्नस्सफलीकुरुष्व ।
प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥ ५४

---

प्रयातस्य तव सम्बन्धिनां तेषामघानां व्यसनानां। नि । 'दुःखैनोव्यसनेष्वघ' मिति वैजयन्ती । मघवा इन्द्रः योस्माभिरुपास्यत इति भावः। विघातं निवारणं क्रियात् करोतु । आशिषि लिङ् लोटाविल्याशीरर्थे लिङ् तस्मादस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया अन्यथा तदसम्भवादिति भावः ॥ ५२

**मागा इति ॥** असम्बाधः असङ्कटः विजन इत्यर्थः । नि । 'सङ्कटं ना तु सम्बाध' इत्यमरः। शिवो निर्बाधः द्वयोरन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमासः। तस्मिन्नसम्बाधशिवेपि देशे चिराय चिरं एकश्चासौ चरश्चैकचरः एकाकी वसन् प्रमादं प्रज्ञादौर्बल्यं मागाः इणोगालुङीतिगादेशः। न च निस्पृहस्य ममाकिञ्चित्करः प्रमाद इति वाच्यमित्याह—मात्सर्येति । मत्सरएव मात्सर्यं द्वेषः रागः स्नेहः ताभ्यामुपहतात्मनां रागद्वेषदूषितस्वभावानां मानसानि मनांसि साधुषु सज्जनेष्वपि विषये स्खलन्ति विकुर्वते हि। अत्र प्रमादनिषेधलब्धाप्रमादरूपकारणस्यानर्थप्राप्तिरूपव्यतिरेककार्येण समर्थनात् । वैधर्म्येण कार्यात्कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ५३

निगमयति—

**तदिति ॥** तत्तस्मात्कारणात् आशु शीघ्रं महर्षेः वचनं कुर्वन् । तपस्यन्नित्यर्थः । नः अस्माकं मनोरथान् सफलीकुरुष्व वैरनिर्यातनेनास्मान् प्रतिष्ठापयेत्यर्थः। प्रार्थनायां लोट्। किञ्च कृतार्थं कृतकृत्यं प्रत्यागतमेव त्वा त्वां। 'त्वामौ द्वितीयाया' इति त्वादेशः। स्तनयोरुपपीड्य स्तनोपपीडं। 'सप्तम्यां चोपपीडरुधकर्ष' इति णमुल्। परिरब्धुं कामो यस्यास्सा परिरब्धुकामास्मि आलिङ्गितुमिच्छामीत्यर्थः। 'तुं काममनसोरपी'ति मकारलोपः । प्राक्कार्यसिद्धेः प्रमदालिङ्गनमपि न प्रीतिदमिति भावः ॥ ५४

उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम् ।
आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः ॥

अथाभिपश्यन्निव विद्विषः पुरः पुरोधसारोपितहेतिसंहतिः ।
बभार रम्योऽपि वपुस्स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम् ॥

अविलङ्घ्य विकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम् ।
अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७

---

**उदीरितामिति ॥** सः अर्जुनः इतीत्थं यज्ञसेनस्यापत्येन स्त्रिया याज्ञसेन्या द्रौपद्या उदीरितां उक्तां नवीकृतः पुनरुद्घाटनेन तथा प्रत्यायितः । अतएवोद्ग्राहितः मनसि निधापितश्च विप्रकारः परिभवो यया तां तां वाचमासाद्य आकर्ण्येत्यर्थः । उदीचीं काष्ठां दिशं । नि । 'दिशस्तु ककुभः काष्ठा ' इत्यमरः । आसाद्य तिग्मरश्मिरिव भृशं दिदीपे जज्वाल चुक्रोधेत्यर्थः ॥ ५५

**अथेति ॥** अथ विद्विषः शत्रून् पुरः अभिपश्यन्निव स्थितः तथा पुरोधसा धौम्येन आरोपिता समन्त्रमाहिता हेतिसंहतिः आयुधकलापो यस्य स तथोक्तः । 'हेतिर्ज्वालाङ्कुरायुध'मिति वैजयन्ती । सः अर्जुनः रम्यः प्रकृत्या सौम्यस्सन्नपि अभिचारः परहिंसाप्रयोजनमस्या आभिचारिकी । 'प्रयोजन'मिति ठञ् । तां क्रियां गतः अभिचारकर्मणि नियुक्त इत्यर्थः । मन्त्र इव भीषयत इति भीषणं । नन्द्यादित्वाल्ल्युप्रत्ययः । वपुः बभार । प्रशान्तो मन्त्रः प्रयोगादिभेदादिव सोऽप्यवस्थाभेदाद्भीषणो बभूवेत्यर्थः ॥ ५६

उक्तमायुधारोपणं विवृण्वन् प्रस्थानमाह त्रिभिरविलंघ्येत्यादिभिः—

**अविलङ्घ्येति ॥** परैः शत्रुभिः अविलङ्घ्यं अनतिक्रमणीयं विकर्षणं यस्य तत् अमोघाकर्षणमित्यर्थः । किञ्च प्रथितो ज्यारवो गुणध्वनिः कर्म बाणमोक्षादिकं च यस्य तत् कार्मुकमुद्वहन्नित्यन्वयः । तथा अरीणां दृष्टिगोचरं दृष्टिपथमगतौ आहवेष्वनिवर्तित्वादस्येति भावः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खङ्गः । संख्यायास्तत्पुरुषस्योपसंख्यानमिति डच् समासान्तः । शितेन तीक्ष्णेन निस्त्रिंशेन युञ्जाते इति शितनिस्त्रिंशयुजौ । सत्सूद्विषेत्यादिना क्विप् । महेषुधी महानिषङ्गौ इषवो धीयन्तेऽनयोरिति विग्रहः । कर्मण्यधिकरणे चेति किप्रत्ययः । नि । 'तूणी-

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षतीः ।
कवचं च सरत्नमुद्वहन् ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८

अलकाधिपभृत्यदर्शितं शिवमुर्वीधरवर्त्म सम्प्रयान् ।
हृदयानि समाविवेश स क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशा-
स्सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६०

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
लक्ष्मीपदलाञ्छने तृतीयस्सर्गः ॥

---

पासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय' इत्यमरः ॥ ५७

**यशसेति ॥** किञ्च गोत्रभिद इन्द्रस्यायुधक्षतीः वज्रप्रहाररन्ध्राणि । खाण्डवदाहसमयसम्भवा इति भावः । महसा स्वकान्त्या यशसेव मूर्तया कीर्त्येव मुहुस्तिरोदधत् आच्छादयत् सरत्नं रत्नसहितं अतएव ज्वलितज्योतिः दीप्ततारकं । नि । 'ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्म' स्विति वैजयन्ती । दिवोन्तरं नभोमध्यमिव स्थितं । नि । 'अन्तरं परिधानीये बाह्ये स्त्रीयेन्तरात्मनि । क्लीबं मध्येवकाशेचे'ति वैजयन्ती । कवचं चोद्वहन् ॥ ५८

**अलकेति ॥** सः अर्जुनः अलकाधिपभृत्यदर्शितं अलकाधिपभृत्येन कुबेरभृत्येन यक्षेण दर्शितं प्रदर्शितं अतएव शिवं निर्बाधं उर्वीधरवर्त्म हिमवन्मार्गं प्रति सम्प्रयान् गच्छन् । क्षणमुद्बाष्पदृशां विप्रयोगदुःखोत्थाश्रुनेत्राणां तपोभृतां द्वैतवनवासिनां तपस्विनां हृदयानि समाविवेश खेदयामासेत्यर्थः ॥ ५९

**अनुजगुरिति ॥** अथ आशा दिशः दिवि भवं दिव्यं । 'दिगादिभ्यो य'दिति यत् । दुन्दुभिध्वानं अनुजगुः अनुदध्वनुः । अनुगायतेर्लिट् । व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने पुष्पवृष्टिश्चाजनिष्टेत्यर्थः । किञ्च अनिभृताः चञ्चलाः

वेलायां कूले या वीचयः ता एव बाहवो यस्य सः तथोक्तः । नि । 'वेला कूलविकारयो' रिति शाश्वतः । पयोधिः स्फुरन्तीमुल्लसन्तीं हर्षात् स्पन्दमानां च भुवं प्रियं इष्टं भारावतरणरूपं कथयिष्यन्निव कथयितुमिवेत्यर्थः । लृट्चेति चकारात् क्रियार्थायां क्रियायां लृट् । आलिलिङ्ग सर्वं चेदं शिवं देवताकार्यप्रवृत्तत्वादस्येति भावः । अत्र विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वात्समासोक्तिरलङ्कारः । तत्र च प्रस्तुतयोर्भूमिसमुद्रयोः प्रतीयमानाभ्यां नायिकानायकाभ्यां भेदे अभेदलक्षणातिशयोक्तिवशादालिङ्गनोक्तिरिति रहस्यं । एवमतिशयोक्त्यनुप्राणिता समासोक्तिः प्रियकथनोत्प्रेक्षामुज्जीवयन्ती तदङ्गभावं भजत इत्युभयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥　　६०

इति श्रीपदवाक्यप्रमाणपारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायां तृतीयस्सर्गः ॥

---

## ॥ चतुर्थस्सर्गः ॥

ततस्स कूजत्कलहंसमेखलां सपाकसस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः प्रियामिवासादितयौवनां भुवम् ॥

विनम्रशालिप्रसवौघशालिनीरपेतपङ्कास्ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम सस्थलीरुपायनीभूतशरद्गुणश्रियः ॥ २

**तत इति** ॥ ततः प्रस्थानानन्तरं जनप्रियः सोऽर्जुनः कलहंसा मेखला इवेत्युपमितसमासः । अन्यत्र कलहंसा एव मेखलेति विशेषणसमासः । कूजन्त्यः कलहंसमेखला यस्यास्तां । अन्यत्र कूजन्ती कलहंसमेखला यस्यास्तां । कलहंसनादिनीमिति पाठे हंसैर्नदनशीलां अन्यत्र हंसवन्नदतीति हंसनादिनी-मिति हंसहासिनीमिति पाठे हंसैर्हसतीति अन्यत्र हंसान् हसतीति सह पाकेन परिणामेन वर्तन्त इति सपाकानि पक्वानि तैः सस्यैः आहितः सम्पादितः पाण्डुतैव गुणो यस्यास्तां भुवं आसादितयौवनां प्राप्तयौवनां प्रियामिव उपजनं जनसमीपे अन्यत्र सखीसमक्षं समीपार्थेऽव्ययीभावः उपाससाद उपगतवान् उपमालङ्कारः ॥ १

**विनम्रेति** ॥ सोऽर्जुनः विनम्रशालिप्रसवौघशालिनीः अवनतशालि-फलस्तोमशोभिनीः अपेतपङ्काः निष्पङ्काः ससरोरुहाण्यंभांसि यासु तास्तथोक्ताः । उपायनीभूताः अर्जुनं प्रति उपहारीभूताः शरद्गुणश्रियः पूर्वोक्तशरद्धर्मसम्पदो यासु ताः उपसीम ग्रामसीमासु विभक्त्यर्थेऽव्ययीभावः । समासान्तविधेरनि-त्यत्वादनश्चेति समासान्तो न भवति । केचित्तु 'अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नी'त्यादि नपुंसकप्रयोगदर्शनान्नपुंसकादन्यतरस्यामिति विकल्पात्साधु-रित्याहुः । स्थलीः अकृत्रिमा भुवः जानपदेत्यादिना अकृत्रिमार्थे ङीष् पश्यन् ननन्द । अत्र शरद्गुणेषु तादात्म्येनारोप्यमाणस्य उपायनस्य प्रकृतनन्दनक्रियोप-योगित्वात्परिणामालङ्कारः ॥ २

निरीक्ष्यमाणा इव विस्मयाकुलैस्सरोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमा मनोऽस्य जह्रुश्शफरीविवृत्तयः ॥ ३

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम् ।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥ ४

नुनोद तस्य स्थलपद्मिनीगतं वितर्कमाविष्कृतफेनसन्तति ।
अवाप्तकिञ्जल्कविभेदमुच्चकैर्विवृत्तपाठीनपराहतं पयः ॥ ५

---

**निरीक्ष्यमाणा इति ॥** विस्मयाकुलैः आश्चर्यरसाविष्टैः अतएवोन्मीलितानि पद्मान्येव लोचनानि येषां तैः सरोभिः निरीक्ष्यमाणा इव स्थिताः हृतः प्रियादृष्टिविलासानां विभ्रमश्शोभा याभिस्तास्तथोक्ता इति मनोहरणे हेतूक्तिः । नि । 'विभ्रमस्संशये भ्रान्तौ शोभायां च'ति वैजयन्ती । शफरीविवृत्तयो मत्स्यीस्फुरितानि अस्यार्जुनस्य मनो जह्रुः ॥ ३

**तुतोषेति ॥** सोऽर्जुनः सवारिजे साम्बुजे वारिणि कलमस्य शालिविशेषस्य । नि । 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी'त्यमरः । रमणीयस्य भावः रामणीयकं 'योपधाद्गुरूपोत्तमाद्वु'ञिति वुञ् प्रत्ययः । तत्पश्यन् अधिकं तुतोष अनुरूपसङ्गमादिति भावः । तथाहि सुदुर्लभे अनुरूपसङ्गमे योग्यसमागमे । लब्धे सतीति शेषः । प्रकर्षलक्ष्मीं योग्यसमागमनिमित्तामुत्कर्षसम्पदं अभिनन्दितुं को नार्हति सर्वोऽप्यभिनन्दत्येवेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

**नुनोदेति ॥** आविष्कृता प्रकाशिता फेनसन्ततिर्डिण्डीरसमूहो येन तत्तथोक्तम् । नि । 'डिण्डीरोऽब्धिकफः फेन' इत्यमरः । अवाप्तः किञ्जल्कविभेदः केसरापगमो येन तत्तथोक्तं उच्चकैः अधिकं यथा भवति तथा विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतं ताडितं । नि । 'सहस्रदंष्ट्रः पाठीन' इत्यमरः । पयः कर्तृ तस्य अर्जुनस्य स्थलपद्मिनीगतं तद्गोचरमित्यर्थः । वितर्कं

कृतोर्मिरेखं शिथिलत्वमायता शनैश्शनैश्शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डु सैकतम् ॥६

मनोरमं प्रापितमन्तरं भ्रुवोरलङ्कृतं केसररेणुनाणुना ।
अलक्तताम्राधरपल्लवश्रिया समानयन्तीमिव बन्धुजीवकम् ॥ ७

नवातपालोहितमाहितं मुहुर्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः परिश्रमाम्भः पुलकेन सर्पता ॥ ८

---

संशयं नुनोद चिच्छेद । पाठीनपराहत्या किञ्जल्कापायेन जलदर्शनात् स्थलपद्मिनीशङ्का निवृत्तेत्यर्थः । अत्र निश्चयोत्तरस्सन्देहालङ्कारः ॥ ५

**कृतेति** ॥ सोऽर्जुनः शिथिलत्वमायता गच्छता दिनेदिने क्षीयमाणेनेत्यर्थः । अत एव शनैश्शनैश्शान्तरयेण अन्यथोर्मिरेखानुदयादिति भावः । वारिणा । कृता ऊर्मयः तरङ्गाण्येव रेखाराजयो यस्य तत्तथोक्तं तरङ्गा अस्य सञ्जातास्तरङ्गितं भङ्गिमत् 'तदस्य सञ्जात'मितीतच् । यत् क्षौमं दुकूलं तद्वद्विपाण्डु शुभ्रमित्युपमालङ्कारः । समुद्रयोषितां नदीनां सिकता अस्य सन्तीति सैकतं पुलिनं सिकताशर्कराभ्यां चेत्यण् प्रत्ययः । नि । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामय' मित्यमरः । निरीक्ष्य रेमे तुतोष ॥ ६

ततस्त्रिभिश्शालिगोपुत्रीं वर्णयति—

**मनोरममिति** ॥ अणुना सूक्ष्मेण केसरेषु किञ्जल्केषु । नि । 'किञ्जल्कः केसरोऽस्त्रिया' मित्यमरः । यो रेणुः परागः तेन अलङ्कृतं अतएव मनो रमयतीति मनोरमं कर्मण्यण् प्रत्ययः । भ्रुवोरन्तरं प्रापितं भ्रूमध्ये निवेशितमित्यर्थः । बन्धुजीवकं बन्धूकपुष्पम् । नि । 'बन्धूको बन्धुजीवक' इत्यमरः । अलक्तताम्रस्य लाक्षारागरक्तस्य अधरपल्लवस्य श्रिया शोभया समानयन्तीं समीकुर्वतीमिव साम्यपरीक्षां कुर्वतीमित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ७

**नवेति** ॥ महान्निवेशः स्थानं ययोस्तौ महानिवेशौ पीवरावित्यर्थः । पयोधरौ परितः स्तनयोस्समन्तादित्यर्थः । अभितः परितस्समयानिकषाहाप्रतियोगेपोति द्वितीया । मुहुराहितं निक्षिप्तं नवातपालोहितं बालातपताम्रं अरविन्दजं रजः परागं सर्पता प्रसरता परिश्रमाम्भः पुलकेन स्वेदोद्भवेन पुलकेन चकास-

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥ ९

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गां ।
समुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरोधसः ॥ १०

---

यन्तीं शोभयन्तीं चकास्तेर्ण्यन्ताच्छतरि ङीप् । अलङ्करणमप्यलं कुर्वतीं । तत्राप्यविकृतामिति भावः ॥ ८

**कपोलेति ॥** पुरः कपोलसंश्लेषि यदवतंसकोत्पलं कर्णोत्पलं तत् । विलोचनत्विषा विभूषयन्तीं आभरणस्याप्याभरणमिति भावः । गोपायतीति गोपिकां कलमस्य गोपिकां शालिगोप्त्रीं ण्वुल् प्रत्ययः । निरीक्ष्य पाण्डोस्सुतेन अर्जुनेन शरदः कृतार्थाताया भावः कृतार्थता साफल्यं 'त्वत लोर्गुणवचनस्य पुंवद्भावो वक्तव्य' इति पुंवद्भावः । † मेने अमानि मन्यतेः कर्मणि लिट् शरदस्साफल्यं न स्वगुणसम्पदस्सद्विनियोगलाभादितिभावः ॥ ९

**उपारता इति ॥** पश्चिमा चासौ रात्रिश्चेति विशेषणसमासः अपररात्रइत्यर्थः । पूर्वादिक्पश्चिमं नभ इत्यादिवदेकदेशिशब्दस्य एकदेशशब्दसामानाधिकरण्यादेकदेशे पर्यवसानं न तु पश्चिमो रात्रेरित्येकदेशिसमासः तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणात् अतएवाहस्सर्वैकदेशेत्यादिना समासान्तोपि न । तस्यापि पूर्वापरादिसूत्रोक्तसमासविषयत्वादिति । प्रकाशवर्षस्त्वेकदेशिसमासमेवाश्रित्य समासान्तमाह—तन्मृग्यं गावश्चरन्त्यत्रेति गोचरो गवां जग्धिस्थानं वनं पश्चिमरात्रौ यो गोचरः तस्मात् उपरताः सन्निवृत्ताः जवेन गां भुवं पतितुं धावितुं अपारयन्तः अशक्नुवन्तः प्रस्नुतपीवरोधसः । प्रस्नुतानि वत्सस्मरणात् स्रवत्क्षीराणि पीवराणि पीनानि ऊधांस्यापीनानि येषां ते । नि ।

---

† सिद्धान्तकौमुद्यां तु कृतार्थशब्दस्य गुणवचनत्वाभावात्सामान्ये नपुंसकमित्युक्तम् ॥

परीतमुक्षापजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम् ॥ ११

विमुच्यमानैरपि तस्य मन्थरं गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं गळद्दुकूलैर्जघनैरिवादधे ॥ १२

गतान् पशूनां सहजन्मबन्धुतां गृहाश्रयं प्रेम वनेषु बिभ्रतः ।

---

'ऊधस्तु क्लीबमापीन' मित्यमरः । 'ऊधसोऽन'ङित्यत्र स्त्रीग्रहणं कर्तव्यमिति नियमान्नानङादेशः उत्सुकाः वत्सेषूत्कण्ठिताः गवां गणाः । तमर्जुनं अवेक्षणोत्सुकं दर्शनलालसं चक्रुः । नि । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ' रित्यमरः । अत्र स्वभावोक्तिरलङ्कारः । श्लो । 'स्वभावोक्ति-रलङ्कारो यथावद्वस्तुवर्णन' मिति लक्षणात् ॥ १०

**परीतमिति ॥** सोऽर्जुनः उक्षापजये । उक्षान्तरभङ्गे सति जयश्रिया परीतं वेष्टितं उच्चैर्नदन्तं क्षतसिन्धुरोधसं रुग्णसरित्तटं शरदि भवां शारदीं पुष्टिं अवयवोपचयं दधतं गवामधिपं महोक्षं सविग्रहं मूर्तिमन्तम् । नि । 'शरीरं वर्ष्म विग्रह' इत्यमरः । दर्पमिवेत्युत्प्रेक्षा ददर्श ॥ ११

**विमुच्यमानैरिति ॥** हिमानीविशदैः हिमसङ्घातशुभ्रैः । नि । 'हिमानी हिमसंहति' रित्यमरः । इन्द्रवरुणेत्यादिना ङीप् । तत्सन्नियोगादानुगागमश्च गवां कदम्बकैः समूहैः कर्तृभिः । नि । 'कदम्बकं समूहेऽस्त्री फले पुष्प-विशेषके' इति विश्वः । मन्थरं मन्दं विमुच्यमानैरपि किमुताविमुच्यमानैरिति भावः । शरन्नदीनां सम्बन्धिभिः शरद्ग्रहणं प्रावृण्णिवृत्त्यर्थं तत्र पुलिनादर्शनादिति भावः । पुलिनैः कर्तृभिः गळद्दुकूलैः जघनैरिव तस्य अर्जुनस्य कुतूहलं कौतुकं आदधे आहितम् ॥ १२

**गतानिति ॥** पाण्डवः अर्जुनः पशूनां गवां सह जन्म येषां ते सहजन्मानः सोदराः त एव बन्धवः तेषां भावस्तत्ता तां गतान् पशुषु सोदराभि-मानवत इत्यर्थः । गृहाश्रयं गृहविषयं प्रेम वनेषु बिभ्रतः वनेषु गृहाभिमानिन

दद‍र्श गोपानुपधेनु पाण्डवः कृतानुकारानिव गोभिरार्जवे ॥ १३

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरंजितैर्नवातपामृष्टसरोजचारुभिः ॥ १४

निबद्धनिश्वासविकम्पिताधरा लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्तितत्रिका विकर्षणैः पाणिविहारहारिभिः ॥ १५

---

इत्यर्थः । आर्जवे ऋजुत्वे विधेयत्वे गोभिः पशुभिः कृतानुकारान् अनुकृतानिव स्थितानित्युत्प्रेक्षा । ततोपि विधेयानित्यर्थः । गाः पान्तीति गोपाः गोपालकाः। 'आतोनुपसर्गे क' इति क प्रत्ययः। तान् उपधेनु धेनुसमीपे समीपार्थेऽव्ययीभावः। ददर्श अत्रोत्प्रेक्षानुप्राणिता स्वभावोक्तिरलङ्कारः ॥ १३

अथ—चतुर्भिर्वल्लवीनर्तकीसाम्येन वर्णयति - कालापकम्—

**परिभ्रमदिति ॥** मूर्धजाः षट्पदा इवेत्युपमितसमासः । सरोजचारुभिरित्युपमानुसारात् । परिभ्रमद्भिश्चलद्भिः मूर्धजषट्पदैः आकुलानि तैः । दन्ताः तैः । दन्ताः केसरा इवेति पूर्ववत्समासः । स्मितोदयेनादर्शिता ईषत्प्रकाशिताः दन्तकेसरा येषां तैस्तथोक्तैः चलत्कुण्डलरश्मिरञ्जितैः चञ्चलकनककर्णवेष्टनप्रभानुलिप्तैः अतएव नवातपामृष्टं बालातपस्पृष्टं यत्सरोजं तद्वच्चारुभिः मुखैः उपलक्षिताः ॥ १४

**निबद्धेति ॥** निबद्धेन अनुबद्धेन निश्वासेन विकम्पिता अधरा यासां तास्तथोक्ताः अतएव प्रस्फुरितैकपल्लवाः प्रचलितैकपल्लवा इत्यर्थः । क्वचित्संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तवर्णादिवदिति कैय्यटः। लता इव स्थिताः दैवादेकपल्लवस्फुरणस्यापि लोके सम्भवादुपमैवेयं नोत्प्रेक्षा । किं च व्यपोढानि विपरीतानि पार्श्वानि येषु तैः पाणिविहारहारिभिः अङ्गविक्षेपमनोहरैः । नि। 'अङ्गहारोङ्गविक्षेप' इत्यमरः। विकर्षणैर्मन्थगुणकर्षणैः अपवर्तितत्रिकाः संवलितनितम्बाः यद्यपि 'पृष्ठवंशाधरे त्रिक'मित्यमरः। तथाप्यत्र नितम्बो लक्ष्यते तन्नैकट्यादिति भावः ॥ १५

व्रजाजिरेष्वम्बुदनादशङ्किनीश्शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥ १६

स मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः ॥
निरीक्षितुं नोपरराम वल्लवीरभिप्रनृत्ता इव वारयोषितः ॥ १७

पपात पूर्वां जहतो विजिह्मतां वृषोपभुक्तान्तिकसस्यसम्पदः ।
रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान्पथः ॥

---

**व्रजेति ॥** व्रजाजिरेषु गोष्ठप्राङ्गणेषु अधिकरणे सप्तमी । 'व्रजोगोष्ठाध्ववृन्दे 'ष्विति विश्वः । अम्बुदनादशङ्किनीः मेघगर्जितभ्रमवतीरिति भ्रान्तिमदलङ्कारः । शिखण्डिनां योषितो मयूरीः योषिद्ग्रहणं मौग्ध्यातिशयात् । उन्मदयत्सु उन्मदाः कुर्वत्सु । तत्करोतीति ण्यन्ताच्छतृप्रत्ययः । मथां मन्थदण्डानां । नि 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डक' इत्यमरः । विवर्तनैः परिभ्रमणैः मुहुः प्रणुन्नेषु कम्पितेष्विति स्वभावोक्तिः । कुम्भेषु कलशेषु मृदङ्गवन्मन्थरं मन्दं नदत्सु स्वनस्विति वाद्यसाम्योक्तिः । भावलक्षणसप्तमीयम् ॥ १६

**स इति ॥** मन्थरं मन्दं वल्गिताः वल्गन्तः पीवराः स्तनाः यासां ताः तथोक्ताः 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधा'दिति ङीप् । परिश्रमेण क्लान्तानि म्लानानि विलोचनोत्पलानि यासां तास्तथोक्ताः वल्लवीः गोपीः । नि । 'गोपे गोपालगोसंख्यगोधुगाभीरपल्लवा ' इत्यमरः । अभिप्रवृत्ताः नृत्यन्तीः । गत्यर्थाकर्मकेत्यादिना कर्मणि क्तः । 'गतिबुद्धिपूजार्थेभ्य'श्चेति चकाराद्वर्तमानार्थत्वं वारयोषितो वेश्या इव । नि । 'वारस्त्री गणिका वेश्ये' त्यमरः । सोर्जुनः । निरीक्षितुं द्रष्टुं । ईक्षतेस्तुमुन् नोपरराम न विरमतिस्म । उपाच्च । विभाषाकर्मकादिति परस्मैपदं अत्र चतुश्श्लोक्यामुपमास्वभावोक्त्योस्संसृष्टिः ॥ १७

**पपातेति ॥** सोर्जुनः पूर्वां प्रावृषेण्यां विजिह्मतां वक्रतां जहतः त्यजतः शरदि निष्पंकत्वेन समरेखयैव सुगमत्वादिति भावः । जहातेश्शतृप्रत्ययः । वृषोपभुक्तान्तिकसस्यसम्पदः वृषभचर्वितप्रान्तसस्यसमृद्धीन् । नि । 'सुकृते वृषभे वृष ' इत्यमरः । सीमन्ता इव । सीमन्ताः चक्रपद्धतयः सीमन्तवन्तः कृताः सीमन्तिताः मत्वन्तात्तत्करोतीति णिचि कर्मणि क्तः णाविष्ठव-

जनैरुपग्राममनिन्द्यकर्मभिर्विविक्तभावेङ्गितभूषणैर्वृतान् ।
भृशं ददर्शाश्रममण्डपोपमास्सपुष्पहासास्सनिवेशवीरुधः ॥ १९

ततस्स सम्प्रेक्ष्य शरद्गुणश्रियं शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमचोदितोपि गां न हीङ्गितज्ञोऽवसरेऽवसीदति ॥

इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः ।

---

न्द्रावान्मतुपो लुक् । रथाङ्गैश्चक्रैः सीमन्तिताः सान्द्राः घनीभूताः कर्दमाः पङ्काः येषु तान् प्रसक्तसम्पातेन सन्ततसञ्चारेण पृथक्कृतान् पथो मार्गान् पपात जगामेति स्वभावोक्तिः ॥ १८

**जनैरिति ॥** सोर्जुनः उपग्रामं ग्रामेषु । विभक्त्यर्थेऽव्ययीभावः । अनिन्द्यकर्मभिः अनिषिद्धवृत्तिभिः वृत्तिश्चैकत्र कृष्यादिः अन्यत्र शिलोंछादिः । विविक्तान्येकाग्राणि । भावः अभिप्रायः इङ्गितं चेष्टा भूषणमलङ्कारश्च येषां तैः तथोक्तैः जनैर्वृताः अधिष्ठिता इत्यर्थः । अतएवाश्रमेषु मुनिस्थानेषु ये मण्डपाः तदुपमाः । नि । 'मण्डपोऽस्त्री जनाश्रय' इत्यमरः । सपुष्पहासाः पुष्पविकाससहिताः । तेन सहेत्यादिना बहुव्रीहिः । निवेशवीरुधो गृहगुल्मिनीः । 'वीरुद्गुल्मिनी' त्यमरः । भृशं सादरं ददर्श । उपमालङ्कारः ॥ १९

**तत इति ॥** ततः सः पूर्वक्तो यक्षः । शरद्गुणश्रियं सम्प्रेक्ष्य दर्शनीयां वर्णनीयां चेति विचार्येत्यर्थः । शरद्गुणालोकने लोलचक्षुषं सतृष्णदृष्टिं । नि । 'लोलश्चलसतृष्णयो' रित्यमरः । तमर्जुनं अचोदितोपि अपृष्टोपि गां वाचमुवाच तथा हि इङ्गितज्ञो भावज्ञः । नि । 'इङ्गितं हृद्गतो भाव' इति । सज्जनः अवसरे उक्तियोग्यकाले नावसीदति न वाचं यच्छति । 'नापृष्टः कस्य चिद्ब्रूयात्'। ‡ इति निषेधस्त्वनाकांक्षितोक्तिविषय इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २०

शरदं वर्णयन् प्रथममाशिषमाशास्ते—

**इयमिति ॥** हे पार्थ शिवायाः कल्याणकारिण्याः नियतेः शुभावह दैवस्य । नि 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि' रित्यमरः । आयतिं

---

‡ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । इति मनुः ॥

जयश्रियं पार्थ पृथूकरोतु ते
शरत्प्रसन्नाम्बुरनम्बुवारिदा ॥ २१

उपैति सस्यं परिणामरम्यता नदीरनौद्धत्यमपङ्कता महीम् ।
नवैर्गुणैस्सम्प्रति संस्तवस्थिरं तिरोहितं प्रेम घनागमश्रियः ॥ २२

पतन्ति नास्मिन् विशदाः पतत्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः ।
तथापि पुष्णाति नभश्श्रियं परां
न रम्यमाहार्यमपेक्षते गुणम् ॥ २३

---

फलदानकाल इव जगतः क्रियाः कृष्यादिकर्माणि फलैः लाभैः । नि । 'लाभ निष्पत्तियोगेषु फले बीजे धने फल 'मिति वैजयन्ती । कृतार्थयन्ती सफलयन्ती प्रसन्नाम्बुः निर्मलोदका अनम्बुवारिदा निर्जलमेघा अनेन विशेषणद्वयेन द्यावापृथिव्योरानुकूल्यं सूचयति । इयं शरत् ते जयश्रियं पृथूकरोतु आशीरर्थे लोट् ॥ २१

**उपैतीति ॥** सस्यं व्रीह्यादिकं परिणामेन पाकेन या रम्यता सा उपैति नदीरनौद्धत्यं गम्यरूपत्वमुपैति । महीं भुवं अपङ्कता निष्पंकत्वं उपैति तथाहि सम्प्रति नवैर्गुणैः पूर्वोक्तैश्शरद्धर्मैस्संस्तवेन परिचयेन स्थिरं दृढमपि घनागमश्रियः प्रावृल्लक्ष्म्याः सम्बन्धि तद्विषयमित्यर्थः । प्रेम तिरोहितं निरस्तमित्यर्थः । 'गुणतन्त्राः प्रेमाणो न परिचयतन्त्रा ' इति भावः । वास्तवालङ्कारः† ॥ २२

**पतन्तीति ॥** अस्मिन्नभसि विशदाः पतत्रिणो बलाकाः न पतन्ति न प्रसरन्ति धृतेन्द्रचापाः पयोदपङ्क्तयश्च न पतन्ति तथापि श्रीकारणाभावेपि नभः खं परां श्रियं शोभां पुष्णाति धत्ते । तथाहि रम्यं स्वभावसुन्दरं वस्तु आहार्यमारोप्यमाणं कृत्रिमं गुणं नापेक्षते । तत्स्वभावस्यैव समर्थत्वादिति भावः । अत्रार्थान्तरन्यासः ॥ २३

---

† नायमलङ्कारोऽलङ्कारशास्त्रे दृष्टः स्वभावोक्तेरेव नामान्तरतया यथाकथंचिन्निर्वाह्यः ॥

विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभा गुणहेमदामभिः ।
इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥ २४

विहाय वांछामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः ।
श्रुतिः श्रयत्युन्मदहंसनिस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥

अमी पृथुस्तम्बभृतः पिशङ्गतां
गता विपाकेन फलस्य शालयः ।

---

**विपाण्डुभिरिति ॥** कदम्बानिलशब्देन वर्षर्तुर्लक्ष्यते । स एव भर्ता तस्य अत्यये विरहे म्लानतया निर्जलतया दुर्बलतया च विपाण्डुभिः च्युतानि अचिराभागुणा विद्युल्लता एव हेमदामानि सुवर्णसूत्राभरणानि येभ्यस्तैः पयोधरैः अम्बुदैरेव पयोधरैः स्तनैरुपलक्षितानां । नि । 'स्तनाम्भोदौ पयोधरा' विति वैजयन्ती । दिश एव वध्वः तासां इयं कृशता न राजत इति न किन्तु राजत एव वियुक्तत्वात् । श्लो । 'आर्ताऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशे'ति स्मरणाच्चेति भावः । सामान्यतः प्रसक्तमराजनं कार्श्यस्यैकेन नञानूद्य द्वितीयेन निषेधति । यथाह वामनः । 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधा' विति ‡ अत्र रूपकालङ्कारः स्फुट एव ॥ २४

**विहायेति ॥** मदात्ययात् मदक्षयात् अरक्तकण्ठस्य अश्रव्यस्वरस्य-कण्ठशब्देनात्र तद्भवः स्वरो लक्ष्यते । शिखण्डिनो मयूरस्य सम्बन्धिनि । उदिते उच्चैस्तरे रुते कूजिते वाञ्छां विहाय श्रुतिः श्रोत्रम् । नि । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रव'इत्यमरः । उन्मदहंसनिस्वनं मत्तमरालकूजितं श्रयति भजते । ननु अकाण्डे कथं परिचितपरिहारेणापरिचिते प्रीत्युदय इत्याशङ्क्यार्थान्तरं न्यस्यति । गुणा इति प्रीणातीति प्रियः 'इगुपधज्ञाप्री किरः कइति कप्रत्ययः । तस्य भावे प्रियत्वे प्रीतिकरत्वे गुणा अधिकृताः नियुक्ताः । संस्तवः परिचयः नाधिकृतः न समर्थ इत्यर्थः । प्रेमाधाने गुणवत्त्वं प्रयोजकं न परिचय इत्यर्थः ॥ २५

**अमी इति ॥** अमी पृथून् स्तम्बान् गुच्छान् बिभ्रतीति पृथुस्तम्बभृतः । नि । 'स्तम्बो गुच्छस्तृणादिन' इत्यमरः । फलस्य प्रसवस्य विपाकेन

---

‡ आदि ५ । अ । १ । सू । ९ ।

विकासि वप्राम्भसि गन्धसूचितं
नमन्ति निघ्रातुमिवासितोत्पलम् ॥ २६

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया ।
पयस्स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाहिविद्विषः ॥

विपाण्डुसंव्यानमिवानलोद्धतं निरुन्धतीस्सप्तपलाशजं रजः ।

---

परिणामेन पिशङ्गतां गताः शालयो व्रीहिविशेषाः वप्राम्भसि केदारोदके नि। 'पुन्नपुंसकयोर्वप्रं केदारं क्षेत्र' मित्यमरः । विकसतीति विकासि विकसितं गन्धेन सूचितं ज्ञापितं असितोत्पलं नीलोत्पलं निघ्रातुमाघ्रातुमिव नमन्ति - निध्यातुमिवेति पाठे द्रष्टुमिवेत्यर्थः। नि। 'निर्वर्णनं तु निध्यानं दर्शनालोकने क्षण' मित्यमरः। अत्र फलभरनिमित्तस्य नमनस्य निघ्राणफलकत्वमुत्प्रेक्ष्यत इति फलोत्प्रेक्षा ॥ २६

अव—अथ चतुर्भिः कालापकमाह—

**मृणालिनीनामिति** ॥ मृणालिनीनां पद्मलतानां त्विषा हरितवर्णेनेत्यर्थः । अनुरञ्जितं तद्वर्णतामापादितमित्यर्थः । तथा अम्भोजपलाशशोभया कमलदलकान्त्या आरुण्येनेत्यर्थः। विभिन्नं मिश्रितं। तथा स्फुरच्छालिशिखापिशङ्गितं स्फुरद्भिः कलमाग्रैः पिङ्गलीकृतं इत्थं नानावर्णत्वात् द्रुतं विगलितं अहिविद्विषः वृत्रशत्रोः। नि। 'सर्पे वृत्रासुरेऽप्यहि' रिति वैजयन्ती। धनुष्खण्डमिव स्थितं नित्यं समासेऽनुत्तरपदस्थस्येति षत्वं। पयो वप्राम्भः अपदिश्य व्याजीकृत्य धावतामित्यागामिना सम्बन्धः। अत्र धनुष्खण्डस्य द्रुतस्य लोके अप्रसिद्धत्वादुत्प्रेक्षेयं नोपमा ॥ २७

**विपाण्डिति** ॥ विपाण्डु शुभ्रं अनिलोद्धतमनिलोत्क्षिप्तं सप्तसप्तपलाशानि पर्णानि पर्वसु येषां ते वृक्षाः सप्तपलाशाः। क्वचित्संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं। तेषां पुष्पाणि सप्तपलाशानि। नि। 'द्विहीनं प्रसवे सर्व' मित्यमरः । 'फले लुगि'त्यणो लुक्। तेषु जातं सप्तपलाशजं रजः परागः संव्यानमुत्तरीयमिव। नि। 'संव्यानमुत्तरीयं' चेत्यमरः । निरुन्धती-

अनाविलोन्मीलितबाणचक्षुषस्सपुष्पहासा वनराजियोषितः ॥२८

अदीपितं वैद्युतजातवेदसा सिताम्बुदच्छेदतिरोहितातपम् ।
ततान्तरं सान्तरवारिशीकरैः शिवं नभोवर्त्म सरोजवायुभिः ॥

सितच्छदानामपदिश्य धावतां रुतैरमीषां ग्रथिताः पतत्रिणाम् ।
प्रकुर्वते वारिदरोधनिर्गताः परस्परालापमिवामला दिशः ॥ ३०

विहारभूमेरभिघोषमुत्सुकाश्शरीरजेभ्यश्च्युतयूथपङ्क्तयः ।

---

निवारयन्तीः प्रावृतवतीरिति यावत् । अनाविलानि अकलुषाणि उन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषीव यासां तास्तथोक्ताः । नि । 'नीलस्त्वार्तगलो दासी बाण ओदनपाक्य पी'ति धन्वन्तरिः । पुष्पाणि हासा इव तैस्सह वर्तन्त इति सपुष्पहासाः वनराजयो योषित इव वनराजयोषितः ताः अपदिश्येत्यन्वयः । अत्र संव्यानमिवेत्युपमैवान्यत्रोपमितसमासे लिङ्गं । यथा काचित्केनचित्कामुकेनाक्षिप्तं स्तनांशुकं निरुन्धे तद्वदिति भावः ॥ २८

**अदीपितमिति ॥** वैद्युतजातवेदसा वैद्युताग्निना अदीपितमप्रकाशितं विद्युत्प्रकाशस्य दृष्टिप्रतिघातकत्वात्तद्राहित्यं गुण इति भावः । सिताम्बुदानां छेदैः खण्डैः तिरोहितातपं न दृष्टिबाधो नाप्यातपबाध इति भावः । सान्तरवारिशीकरैः विरलाम्बुकणैः ततान्तरं व्याप्तमध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म चापदिश्येति स्वाभावोक्तिरलङ्कारः ॥ २९

**सितेति ॥** अपदिश्य पूर्वश्लोकत्रयोक्तं पयःप्रभृतिकमुद्दिश्य धावताममीषां सितच्छदानां पतत्रिणां हंसानां । नि । 'हंसास्तु श्वेतगरुत' इत्यमरः रुतैः शब्दैः ग्रथिताः दृब्धाः । नि । 'ग्रथितं सन्दितं दृब्ध' मित्यमरः—वारिदरोधनिर्गताः मेघोपरोधनिर्मुक्ताः अत एव अमलाः प्रसन्ना दिशः परस्परालापं अन्योन्यसम्भाषणं प्रकुर्वत इव । स्त्रियो हि रोधापगमे परस्परं सम्भाषन्ते 'दिष्ट्या मेघोपरोधनिर्मुक्ताः चिरादुच्छ्वसिता' इति हंसकूजितव्याजेन परस्परमालापं प्रकुर्वन्तीवेत्युत्प्रेक्षा ॥ ३०

**विहारेति ॥** विहारभूमेः अपरराात्रगोचरादित्यर्थः । आगच्छन्त्य इति शेषः । अभिघोषमुत्सुकाः व्रजं प्रत्युत्कण्ठिताः वत्सप्रेम्णेति भावः । नि । 'घोष

असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥

जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसावुपैति मन्त्रैरिव संहिताहुतिः ॥

कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिस्स्वने ।
इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥

---

आभीरपल्ली स्या' दित्यमरः। च्युता त्वरया विघटिता यूथानां कुलानां पङ्क्तिः श्रेणीबन्धो यासां तास्तथोक्ताः। नि । 'सजातीयैः कुलं यूथ' मित्यमरः। अमूः धेनवः। असक्तमप्रतिबन्धं पयः क्षीरं क्षरन्ति स्रवन्ति वत्सस्मरणात् प्रस्रवन्तीत्यर्थः क्षरतेश्शतृप्रत्ययः। ऊधांसि आपीनानि । नि। 'ऊधस्तु क्लीबमापीन' मित्यमरः। शरीरजेभ्योपत्येभ्य उपायनानीव अतितोषकारकाणीवेत्युत्प्रेक्षा। नयन्ति प्रापयन्ति। यथा लोके कुतश्चित्प्रवासादेत्य मातरः किञ्चित्खाद्यमानयन्ति तद्वदिति भावः॥ ३१

जगदिति ॥ जगत्प्रसूतिः जगत्कारणं। आज्यादिहविर्द्वारेणेति भावः। जगतामेकपावनी मुख्यशोधनी। व्रजोपकण्ठं गोष्ठांतिकं । 'दूरान्तिकार्थेभ्यो द्वितीया' चेति द्वितीया। नि । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोव्यय'-मित्यमरः। तनयैः वत्सैः उपेयुषी सङ्गता उपेयिवाननाश्वाननूचानश्चेति क्सुप्रत्ययान्तो निपातः। उगितश्चेति ङीप्। असौ गवां समितिः संहतिः मन्त्रैः ऋग्यजुस्सामभिः । नि । 'मन्त्रो ऋगादिगुह्योऽक्ति' रिति बैजयन्ती । संहिता योजिता आहुतिरिव समग्रां द्युतिं उपैति। आहुतिरपि जगत्प्रसूतिः जगदेकपावनी च। श्लो। 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मरणादिति भावः॥ ३२

कृतेति ॥ जितबर्हिणध्वनौ केकानुसारिणीत्यर्थः । एतेन षड्जस्वरप्रायं गायन्तीति गम्यते। यथाह मातङ्गः 'षड्जं मयूरो वद'तीति। गाः पान्तीति गोपाः 'आतोनुपसर्गे क' इति कप्रत्ययः। तेषां भार्याः गोप्यः। पुंयोगादाख्यायामिति ङीष्। ता एव जनः सुरक्तो मधुरकण्ठो यो गोपीजनो वल्लवीजनः। तस्य गीतनिस्स्वने गाने कृतावधानमेकाग्रचित्तं इदं पुरोवर्ति मृगीकदम्बकं कर्तृ । भूयसीमतिमहतीं जिघत्सां अत्तुमिच्छां अदेस्सन्नन्तादप्रत्ययः। 'लुङ्

असावनास्थापरयावधीरित-

स्सरोरुहिण्या शिरसा नमन्नपि ।

उपैति शुष्यन् कलमस्सहाम्भसा

मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४

अमी समुद्धूतसरोजरेणुना

हृता हृतासारकणेन वायुना ।

उपागमे दुश्चरिता इवापदां

गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३५

---

सनोर्घस्ज' इति घस्जादेशः। अपहाय हित्वा सस्यं नाभ्येति नोपैति । गीता-सक्त्या क्षुधामपि न गणयतीत्यर्थः ॥ ३३

**असाविति ॥** शिरसा अग्रेण मूर्ध्ना च नमन् प्रणमन्नपि अनास्था-परया अनादरपरया सरोरुहिण्या अवधीरितः अवज्ञातः अम्भसा सहचरभूते-नेति भावः । शुष्यन् असौ कलमः शालिविशेषः मनोभुवा तप्त इव कामार्त इव अभिपाण्डुतां उपैति । अत्रानास्थापरयेति प्रकृतसरोरुहिणीविशेषसामर्थ्याद-प्रस्तुतनायिकाप्रतीतेस्समासोक्तिः । उत्तिष्ठमानायास्सरोरुहिण्याः प्रतीयमानया नायिकया सह भेदेप्यभेदलक्षणातिशयोक्तिमहिम्ना अवधीरणक्रियासम्बन्धान्नि-र्वहन्ती मनोभुवा तप्त इवेत्युत्प्रेक्षानिर्वाहिकेत्यतिशयोक्त्यनुप्राणितसमासो-क्त्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४

**अमी इति ॥** समुद्धूतसरोजरेणुनेति सौरभ्योक्तिः । हृतासारकणेन उपात्ताम्बुकणेनेति शैत्योक्तिः । नि । 'धारा सम्पात आसार' इत्यमरः । वायुना हृताः आकृष्टाः अमी शिलीमुखाः भृङ्गाः । आपदामुपागमे राजादिभयागमे । दुश्चरिताः । दुष्टकर्माणश्चौरादय इव । गम्यत इति गतिं गन्तव्यदेशं । नि । 'देशो-पायगमे गति' रिति वैजयन्ती । निश्चेतुं नालं न समर्थाः । एकत्र वायोस्सार्वत्रि-कत्वादन्यत्र भयान्धत्वादिति भावः ॥ ३५

मुखैरसौ विद्रुमभङ्गलोहितैश्शिखाः पिशङ्गीः कलमस्य बिभ्रतीः ।
शुकावलिर्व्यक्तशिरीषकोमला धनुश्श्रियं गोत्रभिदोऽनुगच्छति ॥

इति कथयति तत्र नातिदूरादथ ददृशे पिहितोष्णरश्मिबिम्बः ।
विगलितजलभारशुक्लभासां निचय इवाम्बुमुचां नगाधिराजः॥

तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरिहिमानीगौरमासाद्य जिष्णुः ।
† व्यपगतमदरागस्यानुसस्मार लक्ष्मी-
मसितमधरवासो बिभ्रतस्सीरपाणेः ॥ ३८

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये लक्ष्मीपदलाञ्छने
शरद्वर्णनो नाम चतुर्थस्सर्गः ॥

---

**मुखैरिति ॥** विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः पिशङ्गवर्णाः कलमस्य शिखाः शाल्यग्राणि बिभ्रती व्यक्तशिरीषकोमला विकसितशिरीषसवर्णेत्यर्थः । असौ शुकावलिः गोत्रभिद इन्द्रस्य धनुषः श्रियमनुगच्छति अनुकरोति । नाना-वर्णत्वादिन्द्रधनुरिव भातीत्युपमालङ्कारः ॥ ३६

**इतीति ॥** अथ तत्र तस्मिन् पूर्वोक्ते यक्षे इतीत्थं कथयति सति। नातिदूरात् अनतिदूरात् ईषद्दूर इत्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। पिहितोष्णरश्मिबिम्बः तिरोहितार्कमण्डल इत्यौन्नत्योक्तिः । नगाधिराजो हिमाद्रिः विगलितो जलभारो येभ्यस्ते तथोक्ताः। अत एव शुक्लभासः । द्वयोरन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः। तेषां विगलितजलभारशुक्लभासां शुभ्राणां अम्बुमुचां निचय इव मेघबृन्दमिव ददृशे दृष्टः॥ ३७

**तमिति ॥** जिष्णुरर्जुनः। अतनुभिर्महतीभिः वनराजिभिः श्यामिता-श्श्यामलाः। उपत्यकान्ता आसन्नभूप्रदेशा यस्य तं तथोक्तं । नि । 'उपत्यका-द्रेरासन्ना भूमिरूर्ध्वमधित्यके'त्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयो'रिति त्यकन्प्रत्ययः। उपरिहिमानीभिः हिमसंघातैः गौरं शुभ्रं तं नगं हिमाद्रिं आसाद्य

---

† उपरत.

उपरतो निवृत्तो मदरागो यस्य तस्य असितं नीलं अधरं वासः अन्तरीयं बिभ्रतो धृतवतः सीरं पाणौ यस्य तस्य सीरपाणेः हलायुधस्य । नि । 'हलायुधः । नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । सङ्कर्षणस्सीरपाणि' रित्यमरः । 'सप्तमीविशेषणे बहुव्रीहा' विति ज्ञापकात् व्यधिकरणपदो बहुव्रीहिः । 'प्रहरणार्थेभ्यः परे निष्ठा सप्तम्यौ भवत' इति सप्तम्याः परनिपातः । लक्ष्मीं शोभां अनुसस्मार स्मृतवान् । अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात् स्मरणालङ्कारः । सदृशं सदृशानुभवाद्यत्स्मर्यते तत् स्मरणमिति विद्याधरः ॥ ३८

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां चपुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

अथ जयाय सुमेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः १

तपनमण्डलदीपितमेकतस्सततनैशतमोवृतमन्यतः ।
हसितभिन्नतमिस्रचयं पुरश्शिवमिवानुगतं गजचर्मणा ॥ २

अव—अथ हिमवद्वर्णनमारभते तत्र पञ्चदशभिः श्लोकैः † कुळकमाह—

**अथेति** ॥ अथानन्तरं सोऽर्जुनः । मेरुमहीभृतो हेमाद्रेः जयाय नु जयार्थं वा । नु शब्दोऽत्र वितर्के । नि । 'नु पृच्छायां वितर्के चे' त्यमरः । रभसो वेगः । नि । 'रभसो हर्षवेगयो' रिति वैजयन्ती । तद्वत्या रभसया तीव्रया । अतीवोत्कटयेति यावत् । 'अर्शआदित्वादच् प्रत्ययः । दिगन्तानां दिदृक्षया नु द्रष्टुमिच्छया वा । नभोऽन्तरिक्षं विलङ्घयितुं अतिक्रमितुं वा । समुदितं समुत्पतितमिव स्थितमित्यर्थः । कुतः ? उच्छ्रितं उन्नतं हिमस्याचलं हिमाचलं अभिययौ । अत्रानिर्धारितानेकफलविशिष्टा औन्नत्यगुणनिमित्ता उत्तानक्रियोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगात्प्रतीयमानेति संक्षेपः । द्रुतविलम्बितं वृत्तम् । श्लो । 'द्रुतविलम्बितमाह नभौ भरा' विति लक्षणात् ॥ १

**तपनेति** ॥ पुनः । एकतः एकस्मिन्भागे । सार्वविभक्तिकस्तसिः । तपनमण्डलेन दीपितं प्रकाशितम् । अन्यतः अन्यस्मिन्भागे सततेन निबिडेन नैशेन निशि भवेन तमसा तिमिरेण वृतम् । एकत्राह्ना रात्र्या चान्यत्र सङ्गतमित्यर्थः । अत एव पुरोऽग्रे हसितेन अट्टहासेन भिन्नतमिस्रचयं निरस्ततमस्तोमं तथा गजचर्मणा अनुगतं पश्चाद्व्याप्तम् । नि । 'पश्चात्सादृश्ययोर' न्वित्यमरः । शिवमिव स्थितं तपनतेजः । प्रसारोऽप्यस्य कोण एव कुत्रचित्परिसमाप्यत इति महत्त्वातिशयोक्तिः ॥ २

† अत्र यद्वक्तव्यं तत् तृतीयसर्गादिमपद्ये उक्तम् ।

क्षितिनभस्सुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः ।
प्रथयितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना ॥ ३
भुजगराजसितेन नभश्श्रिता कनकराजिविराजितसानुना ।
समुदितं निचयेन तटित्त्वतीं लघयता शरदम्बुदसंहतिम् ॥ ४
मणिमयूखचयांशुकभासुरास्सुरवधूपरिभुक्तलतागृहाः ।

---

**क्षितीति ॥** परस्परे अन्योन्ये । 'कर्मव्यतीहारे सर्वनाम्नो द्वे भवत' इति वक्तव्यात् परशब्दस्य द्विर्भावः । समासवच्च बहुलं यदा न समासवत् तदा पूर्वपदस्थस्येति वक्तव्यात्प्रथमैकवचनं कस्कादित्वाद्विसर्जनीयस्य सत्वं । बहुवचनं चान्योन्यशब्दवत् । यथाह माघः—श्लो । 'अन्योन्येषां पुष्करैरामृशन्त' इति ॥ अदृष्टाः परस्परे यैस्ते अदृष्टपरस्पराः तैः क्षितौ नभसि सुरलोके च निवसन्तीति तैस्तथोक्तैः । भूर्भुवस्स्वर्लोकवासिभिरित्यर्थः । कृतनिकेतं कृतास्पदं अत एव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुं प्रकटीकर्तुं अभिनिर्मितं जगतां प्रतिनिधिं प्रतिकृतिमिव स्थितमित्युत्प्रेक्षा । नि । 'प्रतिकृतिरर्चा पुंसि प्रतिनिधि-रुपमोपमानं स्या' दित्यमरः । त्रैलोक्यश्लाघ्योऽयमपरिच्छेद्यश्चेति भावः ॥ ३

**भुजगराजेति ॥** पुनश्च भुजगराजसितेन शेषाहिधवलेन नभश्श्रिता गगनस्पृशा । कनकस्य राजिभिः रेखाभिः विराजिताः सानवो यस्य तेन तथोक्तेन । अत एव तटित्त्वतीं शरदम्बुदसंहतिं लघयता लघूकुर्वता । तत्तुल्येनेत्यर्थः । अत एवोपमालङ्कारः । निचयेन शिखरेण । नि । 'निचयश्शिखरे सङ्घ' इति शब्दार्णवे । समुदितं समुन्नतम् ॥ † ४

**मणीति ॥** पुनश्च मणिमयूखचयाः अंशुकानि पताका इव तैः भासुराः भासनशीलाः सुरवधूभिः परिभुक्ता लताः गृहा इव यासु तास्तथोक्ताः ।

---

† अत्र देवनागराक्षरपुस्तके उपलभ्यमानपाठस्तु । "निचयेन शिखरसमूहेन समुदितं समुन्नतं । यद्यपि निचयशब्दश्शिखरस्यावाचकः तथापि पर्वतवर्णनप्रकरणोक्तत्वात्पाषाणनिचयवाचकत्वेन शृङ्गवाची भवितुमर्हति । यथा कूटोऽस्त्री शिखरं शृङ्गमित्यत्र कूटशब्दः समूहापरपर्यायः । अत एव लक्षणाऽऽश्रयणीया । अत एवावाच्यवचनं न दोषः" इति ॥

दधतमुच्चशिलान्तरगोपुराः पुर इवोदितपुष्पवना भुवः ॥ ५

अविरतोज्झितवारिविपाण्डुभिर्विरहितैरचिरद्युतितेजसा ।
उदितपक्षमिवारतनिस्स्वनैः पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६

दधतमाकरिभिः करिभिः क्षतैस्समवतारसमैरसमैस्तटैः ।
विविधकामहिता महितांभसः स्फुटसरोजवना जवना नदीः ॥

---

उच्चानि उन्नतानि शिलान्तराणि शिलामध्यानि गोपुराणि पुरद्वाराणीव यासु ताः तथोक्ताः उदितानि ऊर्जितानि पुष्पाणां वनानि यासु तास्तथोक्ताः अत एव पुर इव नगराणीव स्थिताः । भुवः भूमीः दधतं बिभ्रतम् । पुरोऽपि पताकावत्यो वधूपरिभुक्तगृहा उच्चगोपुरा उदितपुष्पवनाश्च भवन्ति ॥ ५

**अविरतेति** ॥ पुनः अविरतं अविच्छिन्नं उज्झितवारयः मुक्तजलाः अवृष्टिमन्त इत्यर्थः । अतएव विपाण्डवश्च तैः अविरतोज्झितवारिविपाण्डुभिः । अतो हिमवत्पक्षत्वं सम्भवतीति भावः । अचिरद्युतितेजसा विद्युत्प्रभया विरहितैः । आरतनिस्स्वनैः प्रशान्तगर्जितैश्च अन्यथा पक्षत्वहानिस्स्यादिति भावः । पृथुनितम्बविलम्बिभिः महाकटकसङ्गिभिः । नि । 'कटकोऽस्त्री नितम्बोऽद्रे'रित्यमरः । अम्बुदैः मेघैः उदितपक्षं सञ्जातपक्षमिव स्थितं । प्राक्छिन्नपक्षस्यापि हिमाद्रेर्धवळाम्बुदसम्बन्धात्पुनः पक्षोत्थानमुत्प्रेक्ष्यते ॥ ६

**दधतमिति** ॥ पुनः आकरः खनिरेषामस्ति योनित्वेनेत्याकरिभिः आकरजैः । नि । 'खनिः स्त्रियामाकरस्स्या' दित्यमरः । करिभिः गजैः कर्तृभिः क्षतैः रुग्णैस्समवतारेषु तीर्थेषु समैः अनिम्नोन्नतैः असमैरसदृशैरनुपमैरित्यर्थः । तटैरुपलक्षिताः । तथा महिताम्भसः श्लाघ्योदकाः अतएव विविधेभ्यः कामेभ्यः पानावगाहनाद्युपभोगेभ्यः हिताः अनुकूलाः 'चतुर्थी तदर्थे' त्यादिना समासः । स्फुटानि विकसितानि सरोजवनानि यासु ताः जवनाः वेगवतीः 'जुचङ्क्रम्ये'त्यादिना युच् । नदीः दधतं । यमकं वृत्त्यनुप्रासभेदत्वात्स्वयमेवालङ्कारः । अर्थालङ्कारस्त्वभ्युच्चयः । तस्यातिदुष्करत्वाद्रसपोषोऽपि नाद्रियते । तदुक्तं—श्लो ॥ 'प्रायशो यमके चित्रे रसपुष्टिर्न मृग्यत' इति ॥ ७

नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८

पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम् ॥ ९

रहितरत्नचयान्न शिलोच्चयानपलताभवना न दरीभुवः ।
विपुलिनाम्बुरुहा न सरिद्वधूरकुसुमान् दधतं न महीरुहः ॥ १०

---

**नवेति** ॥ पुनश्च नवानि विनिद्राणि विकसितानि च यानि जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विष इव त्विषो येषां तेषां । 'उड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिके'ति वाग्भटः । द्युतिमतां महाश्मनां माणिक्यानां पद्मरागाणामित्यर्थः । विशेषणसामर्थ्यात् निकरेण समूहेन हेतुना क्वचित् निचितास्सङ्घटिताः काञ्चनभित्तयो येषु तेषु सानुषु विहिताः सान्ध्यास्सन्ध्यायां भवा मयूखा यस्मिन् तमिव स्थितं । काञ्चनभित्तिषु पद्मरागप्रभाप्रसरादुदितसन्ध्यारागमिव भातीत्युत्प्रेक्षा ॥ ८

**पृथ्विति** ॥ पुनश्च । पृथुभिः कदम्बकदम्बकैः नीपकुसुमसमूहैः राजितम् । नि । 'कदम्बमाहुस्सिद्धार्थे नीपे च निकुरुम्बक' इत्युभयत्रापि विश्वः । ग्रथितमालैः बद्धपङ्क्तिभिः तमालवनैः तापिच्छवनैः आकुलं आकीर्णम् । नि । 'कालस्कन्धस्तमालस्स्यात्तापिच्छ' इत्यमरः । लघुतुषारं सूक्ष्मशीकरं यत्तुषारजलं हिमोदकं तत् श्च्योतति वर्षतीति तथोक्तम् । नि । 'तुषारौ हिमशीकरा'विति शाश्वतः । 'अन्येभ्योऽपि दृश्यत' इति क्विप् । सदानाः समदाः सदाननाश्शोभनाननाश्च ये दन्तिनस्ते धृता येन तं धृतसदानसदाननदन्तिनम् ॥ ९

**रहितेति** ॥ पुनश्च रहितरत्नचयान् रहितः परित्यक्तो रत्नचयो यैस्तान् रत्नराशिरहितान् शिलोच्चयान् शिखराणि न दधतं अपलताभवनाः लतागृहरहिताः । दरीभुवः गुहाप्रदेशान् न दधतं । नि । 'दरी तु कन्दरो वास्त्री देवखातबिले गुहे'त्यमरः । विगतानि पुलिनान्यम्बुरुहाणि च याभ्यस्ताः । सरितो वध्व इव ताः सरिद्वधूः न दधतं । अत्र सरितां वध्वौपम्यात् पुलिनाम्बुरुहाणां

व्यथितसिन्धुमनीरशनैश्शनैरमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं दयितरम्यलतावकुलैः कुलैः ॥ ११

ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः ।
अविचलं शिखरैरुपबिभ्रतं ध्वनितसूचितमम्बुमुचां चयम् ॥ १२

विकचवारिरुहं दधतं सरस्सकलहंसगणं शुचि मानसम् ।
शिवमगात्मजया च कृतेर्ष्यया सकलहं सगणं शुचिमानसम् ॥

---

जघनवदनोपम्यं गम्यते । अकुसुमान् महीरुहो वृक्षान् न दधतं । किन्तु रत्नादिसम्पन्नानेव शिलोच्चयादीन् दधतमित्यर्थः । महाविभाषया नात्र नञ्-स्समासः ॥ १०

**व्यथितेति ॥** पुनश्च अनीरशनैः अनिर्मेखलैः । सरशनैरित्यर्थः । घनैर्निबिडैः अमरलोकवधूजघनैः शनैर्मन्दं मन्दं व्यथितसिन्धुं क्षोभितनदीकं अयमपरस्स्वर्ग इति भावः । ये रम्याः लताश्च वकुळाः केसराश्च ते दयिताः प्रियाः येषां तैः तथोक्तैः । श्लो । 'विशारदो मद्यगन्धो वकुळस्सच केसर' इति वैद्यके। फणभृतां सर्पाणां कुलैः अभितस्ततं व्याप्तं तथा विततं विस्तृतं । यद्वा विभिः पक्षिभिः ततम् ॥ ११

**ससुरेति ॥** पुनः अनेका विचित्रा मणीनां प्रभा येषां तैस्तथोक्तैः । हिमेन पाण्डुभिश्शिखरैः । ससुरचापं सेन्द्रचापं । अनपयाः निर्जलः अतएव विशदश्च तं अपपयोविशदं अविचलं दैवात् निश्चलं च । अतश्शिखरशङ्कास्पदी-भूतमित्यर्थः । किन्तु ध्वनितेन गर्जितेन सूचितं ज्ञापितमम्बुमुचां मेघानां चयं समूहं उपबिभ्रतं अत्र कविकल्पितसादृश्याच्छिखरमेघसन्देहे मेघनिश्चया-न्निश्चयोत्तरस्सन्देहालङ्कारः ॥ १२

**विकचेति ॥** पुनश्च । विकचवारिरुहं नित्यविकसितारविन्दमित्यर्थः । वृत्तिसामर्थ्यात् कलहंसानां गणैस्सह वर्तत इति सकलहंसगणं । नि । 'कादम्बः कलहंसस्स्या' दित्यमरः । यद्वा—सकलाः सर्वे हंसगणा यस्मिन् तत्तथोक्तं । शुचि नित्यनिर्मलं मानसं मानसाख्यं सरः दधतं । किञ्च कृतेर्ष्यया कुतश्चिन्नि-मित्तात्कुपितयेत्यर्थः । अगात्मजया पार्वत्या सह सकलहं सविवादं सगणं सप्रमथं ।

ग्रहविमानगणानभितो दिवं ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहमुमापतिसेविनः ॥ १४

विततशीकरराशिभिरुच्छ्रितैरुपलरोधविवर्तिभिरम्बुभिः ।
दधतमुन्नतसानुसमुद्धतां धृतसितव्यजनामिव जाह्नवीम् ॥ १५

---

नि । 'गणाः प्रमथसंख्योघा' इति वैजयन्ती । शुचिमानसं अविद्यानिर्मुक्तचित्तं। यद्वा शुचिरग्निः तस्मिन् मानसं रेतो यस्य तं शुचिमानसं । नि । 'मानसं तु विनिर्दिष्टं मनो रेतस्सरस्सुचे'ति विश्वः। शिवं च दधतं। एतेन सकलशैल-वैलक्षण्यमस्योक्तम् ॥ १३

**ग्रहेति ॥** दिवमभितो दिवोभिमुखं 'अभितः परित' इत्यादिना द्वितीया। ग्रहाः चन्द्रादयः विमानानि देवयानानि च। नि। 'व्योमयानं विमानो-ऽस्त्री'त्यमरः । तेषां गणान् ज्वलयता प्रदीपयता। 'मितां ह्रस्व' इति ह्रस्वः । ओषधिजेन तृणविशेषजन्येन कृशानुना वह्निना अनुक्षपं प्रतिनिशं। वीप्सायामव्ययीभावः। उमापतिसेविनः प्रमथादीन् । 'गति बुद्धी'त्यादिना द्विकर्मकत्वं † त्रयाणां पुराणां समाहारस्त्रिपुरं । 'तद्धितार्थे'त्यादिना समासः पात्रादिभ्यः प्रतिषेधो वक्तव्य इति स्त्रीलिङ्गताप्रतिषेधः । तस्य दाहं त्रिपुरदाहं मुहुरनुस्मरयन्तं ‡ नन्वधीगर्थेत्यादिना दाहमित्यत्र षष्ठी किं न स्यात् तस्या-श्शेषार्थे विधानात् शेषत्वस्य चाविवक्षितत्वादिति । अत्र कविसम्मत-सादृश्यात् स्मृतिरिति स्मरणालङ्कारः॥ १४

**विततेति ॥** विततशीकरराशिभिः विस्तृतशीकरपुञ्जैः उच्छ्रितै-रुत्पतितैः । कुतः? उपलरोधेन विवर्तिभिः प्रत्यावृत्तैरम्बुभिः। हेतुभिः धृतसित-

---

† अत्रेदमवधेयं गतिबुद्धीति; सूत्रे 'दृशेश्च' इति वार्तिकारंभात् तत्सूत्रस्थ-बुद्धिपदेन ज्ञानसामान्यार्थकानामेव धातूनां ग्रहणात् स्मरतेश्च ज्ञानविशेषार्थकत्वादत्र गति बुद्धीति सूत्रेण सिद्धान्तकौमुद्यादौ स्पष्टमिति ॥

‡ घटादौ 'स्मृ आध्याने' इत्याध्यान एव मित्वविधानादत्राप्याध्यानार्थकत्व-मङ्गीकृत्यैव मित्संज्ञायां मितां ह्रस्व इति ह्रस्वोपपत्तिर्बोध्या आध्यानं नाम उत्कण्ठापू-र्वकस्मरणम् ॥

अनुचरेण धनाधिपतेरथो नगविलोकनविस्मितमानसः ।
स जगदे वचनं प्रियमादरान्मुखरतावसरे हि विराजते ॥ १६

अलमेष विलोकितः प्रजानां सहसा संहतिमंहसां विहन्तुं ।
घनवर्त्म सहस्रधेव कुर्वन् हिमगौरैरचलाधिपश्शिरोभिः ॥ १७

---

व्यजनामिव गृहीतधवळचामरामिव स्थितामित्युत्प्रेक्षा । उन्नतसानुषु समुद्धतां वहन्तीं (आहतां) जाह्नवीं गङ्गां दधतम् ॥ १५

**अनुचरेणेति ॥** अथो अनन्तरं । नि । 'मङ्गळानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे' त्यमरः । धनाधिपतेः कुबेरस्य अनुचरेण यक्षेण नगविलोकनेन विस्मितमानसः सोऽर्जुनः आदरात् प्रियं वचनं जगदे गदितः गदतेर्ब्रुवत्यर्थस्य दुहादित्वादप्रधाने कर्मणि लिट् । अपृष्टपरिभाषणदोषमर्थान्तरन्यासेन परिहरति—मुखरतेति । मुखरता वाचालत्वं । अपृष्टपरिभाषितेति यावत् । अवसरे श्रोतुराकांक्षासमये विराजते हि । आकांक्षितमपृष्टोऽपि ब्रूयादिति भावः ॥ १६

**अलमिति ॥** हिमेन गौरैः शुभ्रैः शिरोभिः शिखरैः घनवर्त्म आकाशं सहस्रधा कुर्वन् विपाटयन्निवेत्युत्प्रेक्षा । एषोऽचलाधिपो हिमवान् विलोकितः दृष्टमात्र एव प्रजानामंहसां संहतिं पापसङ्घातं सहसा सद्यः विहन्तुं अलं समर्थः । पर्याप्तिवचनेष्वलमर्थेष्विति तुमुन्प्रत्ययः । अन्यथा च व्याख्यायते अचलाधिपो राजा च । नि । 'भूर्भूमिरचलानन्ते' त्यमरः । हिमगौरैर्विमलैः शिरोभिस्सैन्यैः । नि । 'मूर्ध्नि सैन्याग्रभागे च प्रधाने च शिरः स्मृत' मित्यजयः । अरिसैन्यं । नि । 'गगने घनवर्त्म स्यादकूपारारिसैन्ययो'रिति कुमुदाकरे । सहस्रधा कुर्वन् दृष्टमात्र एव जनानामंहसां सङ्घातं सद्यो नाशयितुं अलं समर्थः । यथाह मनुः—श्लो । 'नरेन्द्रास्सत्रिणो गङ्गा सूर्याचन्द्रमसौ शिखी । दृष्टमात्राः पुनंत्येते किं पुनः परिसेविता' इति । औपच्छन्दसिकं वृत्तं † १७

---

† 'पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्' इति तल्लक्षणं बोध्यम् । तथैव, वैताळीयवदेव ॥

इह दुरधिगमैः किञ्चिदेवागमै-
स्सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ १८

रुचिरपल्लवपुष्पलतागृहैरुपलसज्जलजैर्जलराशिभिः ।
नयति सन्ततमुत्सुकतामयं धृतिमतीरुपकान्तमपि स्त्रियः ॥ १९

सुलभैस्सदा नयवतायवता निधिगुह्यकाधिपरमैः परमैः ।

---

**इहेति** ॥ इहास्मिन् पर्वते सुतरं न भवतीत्यसुतरं दुस्तरमित्यर्थः। तरतेः खल् प्रत्ययः । अन्तरं मध्यभागं पुरुषे तु अन्तरं तत्त्वं दुरधिगमैः दुरारोहैः अन्यत्र दुर्ग्रहैरागमैर्वृक्षैः । अन्यत्र पुराणादिभिः । नि 'पुराणेऽप्यागमो वृक्षे' इति रुद्रटः । किञ्चिदेव सततं वर्णयन्ति । न तु कदाचित् । प्रत्यक्षेणापि निश्शेषं वर्णयितुमशक्यत्वादिति भावः । किन्तु अतिविपिनं अतिगहनं दिग्व्यापिनं उभयत्रापि समं अमुं गिरिं परं पुरुषं परमात्मानमिव परं केवलं । नि । 'परमव्ययमिच्छन्ति केवल' इति विश्वः । पद्मयोनिः ब्रह्मैव वेद वेत्ति । नान्य इत्यर्थः 'विदो लटो' वेति णलादेशः अलोपसायमकयोस्संसृष्टिः । क्षमावृत्तं । श्लो । 'तुरगरसयतिर्नौ ततौ गः क्षमे' ति लक्षणात् ॥ १८

**रुचिरेति** ॥ अयं गिरिः रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथा भूता लतागृहा येषु तैः तथोक्तैः । उपलसज्जलजैः विराजमानकमलैः जलराशिभिः सरोभिः करणैः उपकान्तं कान्तसमीपे धृतिमतीः धैर्यवतीरपि समीपस्थानपि प्रियानगणयन्तीः मानिनीरित्यर्थः । स्त्रियः सततं उत्सुकतां नयन्ति तासां मानग्रन्थिं शिथिलयतीत्यर्थः । अथवा उपकान्तं धृतिमतीः तुष्टिमतीरपि सुरतृप्ता अपि पुनरप्युत्सुकतां नयतीत्यर्थः । उभयत्राप्युद्दीपकत्वातिशयोक्तिः। वृत्तमुक्तम् ॥ १९

**सुलभैरिति** ॥ नयवता नीतिमता अयवता भाग्यवता च पुंसा सदा सुलभैः सुखेन प्राप्यैः । नान्यैरित्यर्थः । नि । 'अयश्शुभावहो विधि'रित्यमरः

अमुना धनैः क्षितिभृतातिभृता समतीत्य भाति जगती जगती ॥

अखिलमिदममुष्य गौरीगुरोस्त्रिभुवनमपि नैति मन्ये तुलाम् ।
अधिवसति सदा यदेनं जनैरविदितविभवो भवानीपतिः ॥ २१

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ।

---

निधीनां महापद्मादीनां गुह्यकानां च अधिपं कुबेरं रमयन्तीति तथोक्तैः 'कर्मण्यण्' परमैरुत्कृष्टैः धनैः मणिमुक्तादिभिः करणैः अमुना क्षितिभृता गिरिणा अतिभृता पूर्णा सती अथवा अत्यन्तपोषिता सती 'भृञ् धारण-पोषणयो' रिति धातुः। जगतो मही जगती स्वर्गपाताललोकौ समतीत्य अतिक्रम्य भाति । अमानुषैरपि दुर्लभास्सम्पदोऽत्र सम्भवन्तीति भावः । अत्र धनातिभृतेति पदार्थस्य विशेषणगत्या जगदतिक्रमणहेतुत्वोक्त्या काव्यलिङ्गं तस्य यमकेन संसृष्टिः ॥ प्रमिताक्षरावृत्तं । श्लो । 'प्रमिताक्षरासजससैरुदिते' ति लक्षणात् ॥ २०

**अखिलमिति ॥** अमुष्य गौरीगुरोः हिमवतः इदमखिलं त्रयाणां भुवनानां समाहारस्त्रिभुवनमपि तद्धितार्थोत्तरपदसमाहारे चेति समासः। पात्रादित्वात् स्त्रीत्वप्रतिषेधः। तुलां साम्यं नैति न गच्छतीति मन्ये जानामि यद्यतो जनैरविदितविभवः अज्ञातमहिमा भवानीपतिः शिवः। सदा एनं गिरिं अधिवसति अस्मिन्निवसतीत्यर्थः । उपान्वध्याङ्वस इति कर्मत्वं । अतोऽयं धर्मक्षेत्रमिति भावः। प्रभावृत्तं। श्लो। 'स्वरशरविरतिर्ननौरौ प्रभे 'ति लक्षणात् ॥

**वीतेति ॥** वीते निवृत्ते जन्मजरसौ यस्य तद्वीतजन्मजरसं तस्य 'जराया जरसन्यतरस्या 'मिति जरसादेशः । अत्र तदन्तविधेरिष्टत्वात्परत्वेन स्यादेशबाधकत्वाच्च । तथाहि— 'टाङसिङसामिनात्स्या' दिति स्यादेशबाध-नात् । 'परत्वाज्जरसादेशं बभाषे भाष्यकृत्स्वयम्। सूत्रकारमते यत्तु ज्ञापकात् परबाधनम्। भवेत्तदपि टाङस्योर्न पुनर्ङसि सम्भवेत्। मतद्वयेऽपि तत्तुल्यं ङसि यत्पूर्वबाधनम्। परत्वाज्जरसादेशस्तत्स्यात्स्यादेशबाधनात्। ज्ञापकं चात्र टाङ-स्योर्यावादेशा विनादिति । इकारदीर्घयोस्तत्र वैयर्थ्यं तत्तु तौ विना। एवं सवर्णदीर्घे च रूपसिद्धिर्भवेद्यतः । व्यर्थसूत्राक्षरत्यागात् भङ्क्तैतज्ज्ञापकं फणी । स्वातन्त्र्याज्जरसादेशं जगौ पूर्वस्य बाधनात्। समर्थनप्रपञ्चस्तु भाष्यकैय्यटयो-

आगमादिव तमोपहादितस्सम्भवन्ति मतयो भवच्छिदः ॥ २२

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः ।
पीडाभाजः कुसुमचितास्साशंसं
शंसंत्यस्मिन् सुरतविशेषं शय्याः ॥ २३

---

स्स्फुटः' एवं च सति यदत्र जरसमिति केषाञ्चित्पाठान्तरकल्पनं तदज्ञानविलसितमेव । ब्रह्मणः परमात्मनः सम्बन्धि परमुत्कृष्टं शुचि निष्कळङ्कम् । पद्यत इति पदं स्थानं तादात्म्यलक्षणं मुक्तिमित्यर्थः । उपैतुं प्राप्तुमिच्छतां मुमुक्षूणां । आगमात् शास्त्रादिव तमोपहन्तीति तमोपहादविद्यानिवर्तकात् अपेक्लेशतमसोरिति डप्रत्ययः । इतः अस्माद्गिरेः भवं छिन्दन्तीति भवच्छिदः संसारनिवर्तकाः । 'सत्सूद्विषे' त्यादिना क्विप् । मतयः तत्वज्ञानानि सम्भवन्ति क्षेत्रविशेषस्यापि ज्ञानोपायत्वादित्याशयः । न केवलमयं भोगभूमिः किन्तु मुक्तिक्षेत्रमपीति तात्पर्यम् । रथोद्धतावृत्तं । श्लो । 'रान्नराविह रथोद्धता लगा' विति लक्षणात् ॥

**दिव्येति ॥** अस्मिन् गिरौ चरणलाक्षारागैः पादालक्तकरसैस्सहवर्तन्त इति तथोक्ताः । धेनुकपुरुषायितादिबन्धेषु शय्यायां स्त्रीपादतलस्पर्शात्तद्रागाङ्किता इत्यर्थः । निपतिताः व्यानतकरणे स्त्रीणामधोमुखत्वाद्भ्रष्टाः । पुष्पापीडाः कुसुमशेखरा यासु ताः तथोक्ताः । नि । 'शिखास्वापीडशेखरा' वित्यमरः । पीडाभाजो विमर्दभाजः भङ्गिमत्य इत्यर्थः । आस्मरप्रेङ्खोलितादौ सर्वतः कटिपरिभ्रमणसम्भवादिति भावः । कुसुमैश्चिताः व्याप्ताः कुसुमचिताः इभमार्जारादिकरणेषु स्तनभुजाद्यवयवानां शय्यातलस्पर्शित्वान्मार्दवाय कुसुमास्तृता इत्यर्थः । दिव्यस्त्रीणां सम्बन्धिन्यः शेरते आस्विति शय्याः तल्पानि 'संज्ञायां समजनिषदे' त्यादिना क्यप् । रागायाते रागोद्रेके सति यस्साशंसस्सतृष्णस्सुरतविशेषः । तं । जातावेकवचनम् । सुरतविशेषानित्यर्थः । शंसन्ति सूचयन्ति विवृण्वन्तीत्यर्थः । अत्र लाक्षारागादिपदार्थानां सुरतविशेषशंसनं प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गं यमकेन संसृज्यते । जलधरमालावृत्तम् । तल्लक्षणन्तु—श्लो । 'अब्ध्यङ्गैस्स्याज्जलधरमाला म्भौस्मौ' विति । धेनुकादिबन्धलक्षणं तु रतिरहस्ये—श्लो । 'न्यस्तहस्तयुगळा निजे पदे योषिदेति कटिरूढवल्लभा ।

गुणसम्पदा समधिगम्य परं महिमानमत्र महिते जगताम् ।
नयशालिनि श्रिय इवाधिपतौ विरमन्ति न ज्वलितुमोषधयः ॥
कुररीगणः कृतरवस्तरवः कुसुमानतास्सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः करिणां मुदे सनलदानलदाः ॥ २५

---

अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये । १ । स्वेच्छया भ्रमति वल्लभे प्रिया योषिदाचरति वल्लभायितं । न्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः । २ । तत्कटिं समधिरुह्य वल्लभस्स्याद्वृषाधिपशुसंस्थितिस्वरः । चक्रवद्भ्रमति कुञ्चितत्रिकाभ्रामरं तु जघने समुद्गते । ३ । सर्वतः कटिपरिभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमारतं । भूगतस्तनयुगास्यमस्तकामुन्नतस्फिजमधोमुखीं स्त्रियम् । ४ । क्रामति स्वकरकृष्टमेहने वल्लभे करिवदैभमुच्यते । प्रसारिते पाणिपादे शय्यास्पृशि मुखोरसि । उन्नतायाः स्त्रियाः कट्यां मार्जारकरणं विदु' रिति ग्रन्थान्तरे ॥ २३

**गुणेति** ॥ जगतां महिते जगद्भिः पूज्यमाने 'मतिबुद्धी'त्यादिना वर्तमाने क्तः । क्तस्य च वर्तमान इति षष्ठी । अत्र हिमवति ओषधयः तृणज्योतींषि नयशालिन्यधिपतौ नीतिसम्पन्ने राज्ञि श्रियः सम्पद इव गुणसम्पदा क्षेत्रगुणसम्पत्त्या अन्यत्र सन्ध्यादिगुणसम्पत्त्या परं महिमानं उभयत्राप्यार्तिप्रशमनादिसामर्थ्यं समधिगम्य ज्वलितुं प्रकाशितुं न विरमन्ति अविरतं ज्वलन्तीत्यर्थः । अन्यत्र रात्रावेवेति भावः । प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरा सजससै रुदिते'ति लक्षणात् ॥ २४

**कुररीति** ॥ इहाद्रौ कुररीगणः उत्क्रोशसङ्घः । नि । 'उत्क्रोश कुररौ समौ'वित्यमरः । कृतरवः कृतारवः तरवः कुसुमैः आनताः । कमलं जलं सकमलं सपद्मम् । नि । 'कमलं जलपद्मयो'रिति विश्वः । अथवा कं जलमलमत्यन्तं सकमलं सपद्मं वर्तते । किञ्च वरणाः वरणद्रुमाः आवरणं आच्छादनं । यासां तास्तथोक्ताः । नि । 'वरणे वरणस्सेतुस्तिक्तशाकः कुमारकः' इत्यमरः । सनलदाः सोशीराः । नि । 'मूलेऽस्योशीरमस्त्रियां । अभयं नलदं सेव्य' मित्यमरः । अनलं सन्तापं घ्नन्ति खण्डयति शमयन्तीत्यनलदा सनलदाश्च ता अनलदाश्च सनलदानलदाः । सिन्धवश्च करिणां मुदे भवन्तीति शेषः । न कुत्राप्युक्तवैपरीत्यमिति भावः । प्रमिताक्षरावृत्तम् ॥ २५

साद्दश्यं गतमपनिद्रचूतगन्धै-

रामोदं मदजलसेकजं दधानः ।

एतस्मिन्मदयति कोकिलानकाले

लीनालिस्सुरकरिणां कपोलकाषः ॥ २६

सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम् ।

मता फणवतोवतो रसपरा परास्तवसुधा सुधाधिवसति ॥ २७

---

**साद्दश्यमिति ॥** एतस्मिन्नद्रौ अपनिद्रचूतगन्धैः साद्दश्यं गतं फुल्लाम्रपुष्पसदृशं मदजलसेकजं आमोदं परिमळं दधानो बिभ्राणः । अत एव लीनालिः संसक्तभृङ्गः सुरकरिणां कष्यतेऽत्रेति काषः कपोलानां काषः कषणस्थानं द्रुमस्कन्धादि । अकाले वसन्तातिरिक्ते कालेऽपि कोकिलान् पिकान् मदयति मदयुक्तान् करोति । 'मितां ह्रस्व इति' ह्रस्वः । अत्र वसन्तरूपकारणाभावेऽपि मदाख्यकार्योत्पत्तिकथनाद्विभावनालङ्कारः । तदुक्तम्—श्लो । 'कारणेन विना कार्यस्योत्पत्तिस्स्याद्विभावने'ति । सा च चूतगन्धैस्साद्दश्यं गतमित्युपमया । आमोदं दधान इति पदार्थहेतुककाव्यलिङ्गेन चाङ्गाङ्गिभावेन सङ्कीर्यते । किं च—कोकिलानां मदगन्धे चूतगन्धभ्रान्त्या भ्रान्तिमदलङ्कारो व्यज्यते । प्रहर्षिणीवृत्तम् । श्लो । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीय' मिति लक्षणात् ॥ २६

**सनाकेति ॥** पुनश्च सनाकवनितं साप्सरस्कं नितम्बैः कटकैः रुचिरं सुनिनदैः श्रव्यघोषैः नदैः पुंप्रवाहैः वृतममुं गिरिं अमुष्मिन् गिरावित्यर्थः । 'उपान्वध्याङ्वस' इति कर्मत्वम् । अवतः अधोलोकरक्षकस्य फणवतो नागराजस्य मता इष्टा 'मतिबुद्धी'त्यादिना वर्तमाने क्तः । तद्योगात् क्तस्य च वर्तमान इति षष्ठी । रसेन स्वादेन परा उत्कृष्टा । परास्तवसुधा त्यक्तभूलोका सुधा अमृतं चिरं अधिवसति अतोऽन्यत्र भूमण्डले कुत्रापि सुधा नास्तीत्यर्थः । मेरुप्रतिभटोऽयं गिरिरिति भावः । अत्र प्रस्तुतविशेषणसामर्थ्यादप्रस्तुतमेरुप्रतीतेस्समासोक्तिरलङ्कारः । स च यमकेन संसृज्यते । जलोद्धतगतिवृत्तम् । 'रसैर्जसजसाजलोद्धतगतिः' इति लक्षणात् ॥ २७

श्रीमल्लताभवनमोषधयः प्रदीपा
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवस्सुरसुन्दरीभ्यः ॥ २८

ईशार्थमम्भसि चिराय तपश्चरन्त्या
यादोविलङ्घनविलोलविलोचनायाः ।
आलम्बताग्रकरमत्र भवो भवान्या-
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥ २९

---

**श्रीमदिति ॥** अस्मिन्नद्रौ श्रीमत्समृद्धिमत् लता एव भवनं ओषधयः तृणज्योतींष्येव प्रदीपाः समानगुणत्वात् नवानि हरिचन्दनपल्लवानि सुरतरुकिसलयान्येव शय्याः । नि । 'हरिचन्दनमाख्यातं गोशीर्षे सुरपादप' इति विश्वः । रतिश्रमनुदस्सुरतश्रमहारिणः सरोजवाताश्च सुरसुन्दरीभ्यः क्रियाग्रहणाच्चतुर्थी । दिवो दिवं अधीगर्थेत्यादिना कर्मणि षष्ठी । स्मर्तुं ध्यातुं न दिशन्ति विस्मारयन्तीत्यर्थः । स्वर्गादप्यतिरिच्यतेऽसाविति भावः । अत्र पूर्वार्धे रूपकत्रयं स्फुटमेव । वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजाजगौग' इति लक्षणात् ॥ २८

**ईशार्थमिति ॥** ईशाय ईशार्थं यथा तथेति क्रियाविशेषणं ईश्वरप्राप्त्यर्थम् । अर्थेन सह नित्यसमासस्सर्वलिङ्गता च वक्तव्या । चिराय चिरं अम्भसि तपश्चरन्त्याः अत एव यादोविलङ्घनविलोलविलोचनायाः जलजन्तुविघट्टनचलितेक्षणायाः तपसोऽप्यधिकं दृष्टैयव विलोभयन्त्या इति भावः । नि । 'यादांसि जलजन्तव' इत्यमरः । भवान्याः भवपत्न्याः । प्रयोगकालापेक्षोयं निर्देशः 'इन्द्रवरुणभवे'त्यादिना ङीप् आनुगागमश्च । करैकदेशस्यापि करत्वादग्रं चासौ करश्चेति समानाधिकरणसमासः । अत एव वामनः 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदा'दिति † तमग्रकरं भवश्शिवश्च्योतन्निदाघसलिलाङ्गुलिना

---

† अधि ५. अ. २. सू. २०.

येनापविद्धसलिलस्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ ३०

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः ।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥ ३१

---

स्रवत्स्वेदाङ्गुलिनेति सात्त्विकोदयोक्तिः । करेण अत्र गिरौ आलम्बत गृहीतवान् । अत्राद्भुतातीतवृत्तान्तस्य प्रत्यक्षवदभिधानाद्भाविकालङ्कारः । श्लो । 'अतीतानागते यत्र प्रत्यक्षत्वेन लक्षिते । अत्यद्भुतार्थकथनाद्भाविकं तदुदाहृत' मिति लक्षणात् । वसन्ततिलकावृत्तम् ॥ २९

**येनेति ॥** देवाश्चासुराश्च तैर्देवासुरैः 'येषां च विरोधश्शाश्वतिक' इति नैकवद्भावः । यतस्तेषां विरोधः कार्यत एव न गोव्याघ्रादिवच्छाश्वतिक इत्याहुः । येन मन्दराद्रिणा मन्थदण्डीकृतेनेति भावः । अपविद्धसलिलः अपक्षिप्तजलः । अतएव स्फुटं नागसद्म पातालं यस्मिन् सोम्बुधिरमृतं ममन्थे मथितः । 'मथ्नातेर्दुहादित्वादप्रधाने कर्मणि लिट्' । अहिपतेः । मन्थगुणीकृतवासुकेरित्यर्थः । श्लो । 'मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकि'मिति भारतवचनात् । व्यावर्तनैः वेष्टनैः आहिताङ्कः कृतचिह्नः । सोऽयं मन्दराद्रिः खं आकाशं व्यालिखन्निव विपाटयन्निव विभाति । विचित्रमणिप्रभाभिः चित्रं कुर्वन्निवेति द्योत्यते । अत्रौन्नत्यानुपादानेनैव खलेखनोत्प्रेक्षणादनुपात्तगुणनिमित्तक्रिया स्वरूपोत्प्रेक्षा ॥ ३०

**नीतेति ॥** इहाद्रौ अशिशिररश्मेरुष्णांशोः उस्रैर्मयूखैस्सङ्क्रान्तैरिति भावः । उच्छ्रायं नीता विस्तारितेत्यर्थः । तथा आनीलाभैरसितप्रभैः रत्नैरिन्द्रनीलैर्विरचितपरभागा तत्सन्निधानाल्लब्धोत्कर्षेत्यर्थः । हंस इव श्येनी श्वेतवर्णा । नि । 'विशदश्वेतपाण्डरा' इत्यमरः । 'वर्णादनुदात्तात्तोपधात्तो न' इति श्वेतशब्दात् ङीप् । तकारस्य च नकारः । स्फटिकानां रजतानां च भित्तयः तासां छाया

दधत इव विलासशालिनृत्तं मृदुपतता पवनेन कम्पितानि ।
इह ललितविलासिनीजनभ्रूगतिकुटिलेषु पयस्सु पङ्कजानि ॥ ३२

अस्मिन्नगृह्यत पिनाकभृता सलील-
मावद्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गळमहौषधिरीश्वरायाः
स्रस्तोरगप्रातिसरेण करेण पाणिः ॥ ३३

क्रामद्भिर्घनपदवीमनेकसङ्ख्यै-
स्तेजोभिश्शुचिमणिजन्मभिर्विभिन्नः ।

---

कान्तिः । अह्नो मध्ये मध्याह्नेऽपि मुहुः ज्योत्स्नाशङ्कां वितरति ज्योत्स्नाभ्रमं जनयतीति भ्रान्तिमदलङ्कारः ॥ ३१

**दधत इति** ॥ इहाद्रौ मृदुपतता मन्दं वहता पवनेन कम्पितानि पङ्कजानि । ललितविलासिनीजनस्य भ्रूगतिवत्कुटिलेषु ईषत्तरङ्गितेष्वित्यर्थः । पयस्सु विलासशालिनृत्तं दधत इव । सविलासं नृत्यन्तीवेत्युत्प्रेक्षा । पुष्पिताग्रा-वृत्तम् ॥ ३२

**अस्मिन्निति** ॥ अस्मिन्नद्रौ पिनाकभृता शिवेन अधीरविलोचनायाः चकितदृष्टेः उरगदर्शनादिति भावः । ईश्वरायाः गौर्याः । 'स्थेशभासे' त्यादिना वरच् । पुंयोगविवक्षाभावान्न ङीप् । आबद्धवेपथुः प्राप्तकम्प इति सात्त्विकोक्तिः । 'ट्वितोऽथुजि 'त्यथुच् प्रत्ययः । विन्यस्ता मङ्गळमहौषधिर्यवाङ्कुरादिर्यस्मिन् स पाणिः स्रस्तो गळितः उरग एव प्रतिसरः कौतुकसूत्रं यस्य तेन । नि । 'आहुः प्रतिसरं हस्तसूत्रे माल्ये च मण्डन ' इति विश्वः । करेण सलीलं सविलासमगृह्यत । अत्र देवस्य पार्वतीपरिणयवर्णनं ईशार्थमित्यल तु अनुग्रहमात्रोक्तिरित्यपौनरुक्त्यम् । भाविकालङ्कारः । वसन्ततिलकावृत्तम् ॥ ३३

**क्रामद्भिरिति** ॥ इहाद्रौ घनपदवीमाकाशं क्रामद्भिः व्याप्नुवानैः । अनेकसंख्यैः परस्सहस्रैरित्यर्थः । क्वचिदनेकवर्णैरिति प्रामादिकः पाठः । वैयर्थ्या-

उस्राणां व्यभिचरतीव सप्तसप्तेः
पर्यस्यन्निह निचयस्सहस्रसंख्यानम् ॥ ३४

व्यधत्त यस्मिन् पुरमुच्चगोपुरां पुरां विजेतुर्धृतये धनाधिपः ।
स एष कैलास उपान्तसर्पिणः करोत्यकालास्तमयं विवस्वतः ॥

नानारत्नज्योतिषां सन्निपातैश्छन्नेष्वन्तस्सानु वप्रान्तरेषु ।
बद्धां बद्धां भित्तिशङ्कामुष्मिन्नावानावान्मातरिश्वा निहन्ति ॥

---

घ्राघाताच्चेति । शुचिमणिभ्यः स्फटिकमणिभ्यो जन्म येषां तैः । जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणोपीष्यत इति वामनः । तेजोभिः विभिन्नो विमिश्रः अतएव पर्यस्यन् प्रसर्पन् । सप्तसप्तेः सवितुः । उस्राणां किरणानां निचयो निकरः सहस्रमिति सङ्ख्या सहस्रसङ्ख्या । तां स्वनियतामिति शेषः । व्यभिचरति अतिक्रामतीवेत्युत्प्रेक्षा । प्रहर्षणीवृत्तं ॥ ३४

व्यधत्तेति ॥ यस्मिन् कैलासे धनाधिपः कुबेरः पुरां विजेतुः शिवस्य धृतये सन्तोषाय उच्चगोपुरामुन्नतपुरद्वारां । नि । 'पुरद्वारं तु गोपुर'मित्यमरः । पुरं अलकाख्यां पुरीं व्यधत्त निर्मितवान् । तत्सखत्वादिति भावः । स एष कैलासः उपान्तसर्पिणः प्रान्तचारिणो विवस्वतः । अकाले प्रसिद्धेतरकाले अस्तमयं करोतीत्युत्प्रेक्षा । वस्तुतस्तु तत्करणाभावात् । व्यञ्जकाप्रयोगाद्गम्या । सा च विवस्वत उपान्तसर्पित्वासम्बन्धेऽपि सम्बन्धलक्षणातिशयोक्त्युत्थापितेति विवेकः । अस्तमिति मकारान्तमव्ययं । तस्य पचाद्यजन्तेनायशब्देन षष्ठीसमासः । वंशस्थं वृत्तं । 'जतौ तु वंशस्थमुदीरितं जरा' विति लक्षणात् ॥ ३५

नानेति ॥ अमुष्मिन्कैलासे अन्तस्सानु सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । नानारत्नज्योतिषां विविधमणिमयूखानां सन्निपातैः व्यतिकरैः । छन्नेषु छादितेषु । 'वादान्तशान्ते'त्यादिना निपातः । वप्रान्तरेषु तटान्तरालेषु बद्धां बद्धां अभीक्ष्णं बद्धां । दृढोत्पादितामित्यर्थः । 'नित्यवीप्सयो'रिति नित्यार्थे द्विर्भावः । नित्यमभीक्ष्णमिति काशिकायां एकपदं चैतत् । भित्तिशङ्कां भित्तिरिति सन्देहं । आवानावात् अभीक्ष्णमापतन् । आङ्पूर्वा द्वाधातोश्शतृप्रत्ययः । द्विर्भावादिपूर्ववत् । मातर्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः कनिन्

रम्या नवद्युतिरुपैति न शाद्वलेभ्य-
श्श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥ ३७

परिसरविषयेषु लीढमुक्ता हरिततृणोद्गमशङ्कया मृगीभिः ।
इह नवशुककोमला मणीनां रविकरसन्दलिताः फलन्ति भासः ॥

---

प्रत्ययः । 'तत्पुरुषे कृतिबहुल' मित्यलुक् । निहन्ति निवारयति । वायुसञ्चाराद्भित्त्यभावोऽवधार्यत इत्यर्थः । अत्र निश्चयान्तस्सन्देहालङ्कारः । शालिनीवृत्तं ॥

**रम्येति** ॥ अस्मिन्नद्रौ । शादाः शष्पाणि सन्त्येष्विति शाद्वलाः तेभ्यः। नि । 'शाद्वलश्शादहरित' इत्यमरः । नडशादाड्डुलच् । रम्या रमणीया । नवद्युतिः प्रत्यग्रकान्तिः नापैति । किन्तु नित्येत्यर्थः । नलिनीवनानि अनुदिनं सर्वदा श्यामीभवन्ति । न कदाचित्पाण्डुरीभवन्तीत्यर्थः । विचित्रकुसुमस्तवकैः आचितानां व्याप्तानां शाखाभृतां तरूणां पल्लवानि न परिणमन्ति न जीर्णानि भवन्ति । सर्वदा नूतनमेव सर्वं वर्तत इत्यर्थः । अत्र प्रस्तुतस्यैव तत्तद्वस्तुगतकान्ति स्थैर्यरूपकार्यस्य वर्णनात् प्रस्तुतमेव कारणं कश्चिदसाधारणः कैलासस्य महिमा गम्यत इति पर्यायोक्तिरलङ्कारः । तदुक्तं—श्लो ॥ 'कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् । प्रस्तुतत्वेन सम्बद्धं तत्पर्यायोक्तमुच्यत' इति ॥ ३७

**परिसरेति** ॥ इहाद्रौ परिसरविषयेषु पर्यन्तदेशेषु । 'विषयो देश' इति निपातः । मृगीभिः हरिततृणोद्गमशङ्कया बालतृणांकुरभ्रान्त्येति भ्रान्तिमदलङ्कारः । लीढाः पूर्वमास्वादिताः पश्चान्मुक्ताः लीढमुक्ताः । दग्धप्ररूढा इत्यादिवत् । पूर्वकालेत्यादिना समानाधिकरणसमासः । नवशुकवत्कोमलाः । शुकसवर्णा इत्यर्थः । मणीनां मरकतमणीनां भासः रविकरैः संवलिताः मिश्रितास्सत्यः फलन्ति सम्मूर्छन्ति । वर्धन्त इति यावत् । मृगीग्रहणमत्यन्तमौग्ध्यप्रदर्शनाय ॥

उत्फुल्लस्थलनलिनीवनादमुष्मा-

दुद्धूतस्सरसिजसम्भवः परागः ।

वात्याभिर्वियति विवर्तितस्समन्ता-

दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ३९

इह सनियमयोस्सुरापगायामुषसि सयावकसव्यपादरेखा ।

कथयति शिवयोश्शरीरयोगं विषमपदा पदवी विवर्तनेषु ॥ ४०

---

**उत्फुल्लेति ॥** वात्याभिः वातसमूहैः चक्रानिलैः । 'पाशादिभ्योय' इति यप्रत्ययः । अमुष्मात्पुरोवर्तिनः उत्फुल्लस्थलनलिनीवनात् जलपतितस्य परागस्य उत्थानाभावात् स्थलग्रहणं । 'उत्फुल्लसम्फुल्लयोरुपसंख्यान' मिति निष्ठानत्वं । उद्धूतः उत्थापितः । वियति समन्ताद्विवर्तितः परिमण्डलितः अन्तराळे तु दण्डायमान एवेति भावः । सरसिजसम्भवः पद्मोद्भवः परागः । रूढ्यभिप्रायेणात्र सरसिजशब्दप्रयोगो द्रष्टव्यः । कनकमयातपत्रलक्ष्मीमाधत्ते बिभर्ति । अत्र परागस्यातपत्रलक्ष्मीसम्बन्धासम्भवात्तत्सदृशीं लक्ष्मीमिति प्रतिबिम्बाक्षेपादसम्भवद्धर्मसम्बन्धनिबन्धनेयं निदर्शना । तदुक्तं 'असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शने'ति ॥ ३९

**इहेति ॥** इहाद्रौ उषसि प्रभातेति । सुरापगायां गङ्गायां । लक्षणया तत्कूले । सयावकास्सालक्ताः सव्यपादस्य वामचरणस्य रेखा मुद्रा यस्यास्सा । नि। 'यावो लक्तो द्रुमामय' इत्यमरः । तथा विषमाणि महदल्पानि पदानि यस्यां सा । विवर्तनेषु प्रदक्षिणक्रियासु पदवी शिवयोः प्रदक्षिणपद्धतिरित्यर्थः । सनियमयोः सन्ध्यां प्रणमतोरित्यर्थः । शिवा च शिवश्च शिवौ तयोरुमाशङ्करयोः । 'पुमांस्त्रिये'त्येकशेषः । शरीरयोगं अर्धाङ्गसङ्घटनारूपं कथयति । न नियमयोरित्यनेन नियमसमयेऽपि विरहासहाविह विहरतश्शिवाविति व्यज्यते । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः ॥ ४०

सम्मूर्छतां रजतभित्तिमयूखजालै-
रालोलपापलतान्तरनिर्गतानाम् ।
घर्मद्युतेरिह मुहुः पटलानि धाम्ना-
मादर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१

शुक्लैर्मयूखनिचयैः परिवीतमूर्ति-
र्वप्राभिघातपरिमण्डलितोरुदेहः ।
शृङ्गाण्यमुष्य भजते गणभर्तुरुक्षा
कुर्वन् वधूजनमनस्सु शशाङ्कशङ्काम् ॥ ४२

---

**सम्मूर्छतामिति** ॥ इहाद्रौ रजतभित्तिमयूखजालैः सम्मूर्छतां बहुळीभवतां आलोलानां पादपलतानां तरुशाखानां अन्तरेषु रन्ध्रेषु निर्गतानां प्रसृतानां घर्मद्युतेरुष्णांशोः धाम्नां तेजसां आदर्शमण्डलनिभानि दर्पणबिम्बसदृशानीत्युपमालङ्कारः । पटलानि मण्डलानि । मुहुर्वारं वारं समुल्लसन्ति स्फुरन्ति । न तु सातत्येन । लतानामालोलत्वात् । तच्च नान्यत्र मृत्पाषाणादिप्राये सम्भवतीति भावः ॥ ४१

**शुक्लैरिति** ॥ शुक्लैश्शुभ्रैः मयूखनिचयैः किरणसमूहैः परिवीतमूर्तिः व्याप्तदेहः । वप्राभिघातेन वप्रक्रीडया परिमण्डलितः वर्तुलीकृतः उरुदेहो बृहच्छरीरं येन स तथोक्तः । गणभर्तुः प्रमथनाथस्य उक्षा वृषभः । नि । 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृष' इत्यमरः । वधूजनमनस्सु शशाङ्कशङ्कां चन्द्रभ्रान्तिं कुर्वन् । तासां मौग्ध्यादिति भावः ॥ अमुष्याद्रेः शृङ्गाणि भजते सेवते । अत्र शङ्काशब्दस्य सन्देहार्थत्वे सन्देहालङ्कारः ॥ भ्रान्तिपरत्वे भ्रान्तिमदलङ्कारः । यथेच्छसि तथास्तु । स चोक्षविशेषणोत्थेन काव्यलिङ्गेन अङ्गाङ्गिभावेन सङ्कीर्यते ॥ ४२

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले ।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवश्शिखरमणिरुचः ॥ ४३

स्नपितनवलतातरुप्रवालैरमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भोरमलयतीह वनान्तमिन्दुलेखा ॥

क्षिपति योऽनुवनं विततां बृहद्बृहतिकामिव रौचनिकीं रुचम् ।

---

**सम्प्रतीति ॥** इहाद्रौ विविधाः नानावर्णाः शिखरमणिरुचः सम्प्रति शरदीत्यर्थः । लघुनि अगुरिणि कुतः क्षीणपयसि अतएव भिदां भेदं "षिद्भिदादिभ्यो ङि" त्यङ्प्रत्ययः । उपेयुषि गते जलधरपटले मेघमण्डले कथमपि कृच्छ्रात् । शनकैः लब्धजन्म जातमित्यर्थः । अत एव खण्डितविग्रहं विच्छिन्नस्वरूपं । बलभिदः इन्द्रस्य धनुः पूरयितुं सन्धातुं विभवः समर्था भवन्ति । अत्र मणिरुचीनामिन्द्रधनुःपूरणासम्बन्धेऽपि सम्बन्धकथनादतिशयोक्तिरलङ्कारः । वंशपत्रपतितं वृत्तं । तल्लक्षणन्तु—श्लो 'दिङ्मुनिवंशपत्रपतितं भरनभनलगै'रिति ॥ ४३

**स्नपितेति ॥** इहाद्रौ । शम्भोः इन्दुलेखा स्नपितानि सिक्तानि नवानि लतानां तरूणां च प्रवालानि यैस्तैः । तथा अमृतलवस्रुत्या अमृतबिन्दुनिष्यन्देन शालन्ते ये तैः मयूखैः किरणैः सततं सर्वकालं असितयामिनीषु कृष्णपक्षरात्रिष्वपि वनान्तं वनमध्यं अमलयति विशदयति । अन्यत्र तु नैतदस्तीति व्यतिरेको व्यज्यते । पुष्पिताग्रावृत्तम् ॥ ४४

**क्षिपतीति ॥** अथ योऽद्रिः अनुवनं विततां रौचनिकीं रुचं सौवर्णीं कान्तिमित्यर्थः । रोचनया रक्तां रौचनिकीं "लाक्षारोचनाट्ठक्" इति ठक् । 'टिड्ढाणञि'त्यादिना ङीप् । उत्प्रेक्षते । बृहती चासौ बृहतिका च तां बृहद्बृहतिकां महोत्तरासङ्गमिव । नि । 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथे'

अयमनेकहिरण्मयकन्दरस्तव पितुर्दयितो जगतीधरः ॥ ४५

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणितास्सहसा मयूखैः ।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तटिद्विलसितानि विडम्बयन्ति ॥ ४६

कषणकम्पनिरस्तमहाहिभिः क्षणविमत्तमतङ्गजवर्जितैः ।
इह मदस्नपितैरनुमीयते सुरगजस्य गतं हरिचन्दनैः ॥ ४७

जलदजालघनैरसिताश्मनामुपहतप्रचयेह मरीचिभिः ।

---

त्यमरः । क्षिपति प्रसारयति अनेकाः हिरण्मय्यः कन्दरा यस्य सः । हिरण्यशब्दो 'दाण्डिनायने'त्यादिना निपातनात्साधुः । अयं पुरोवर्ती गिरिरित्यर्थः । तव पितुः इन्द्रस्य दयितः प्रियः । जगत्या धरो जगतीधरः भूधरः । यस्ते गन्तव्यः इन्द्रकीलाख्य इत्यर्थः ॥ ४५

**सक्तिमिति ॥** अमुत्र अमुष्मिन्नद्रौ । अनिले जवात् झडिति लतानां सक्तिमन्योन्यसङ्गमपनयति सति सहसा हठात् वैरोचनैः सावित्रैर्मयूखैः । द्विगुणाः द्विरावृत्ताः कृताः द्विगुणिताः । नि । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रिया-मुख्यतन्तु' ष्विति वैजयन्ती । हिरण्मयीनां हिरण्यविकाराणां 'दांडिनायने' त्यादिना निपातनात्साधुः । रोधोभुवां तटभुवां भासो मुहुः तटिद्विलसितानि विडम्बयन्ति । अनुकुर्वन्तीत्यर्थः । उपमालङ्कारः ॥ ४६

**कषणेति ॥** इहाद्रौ कषणेन कंडूयनेन यः कम्पः तेन निरस्ता महाहयो महासर्पा येभ्यस्तैः । क्षणं विमत्तमतङ्गजवर्जितैः । मत्तमातङ्गरहितैः । कुतः? मदस्नपितैः । ऐरावतमदसिक्तैरित्यर्थः 'मितां ह्रस्व' इति ह्रस्वत्वं । हरिचन्दनैः चन्दनद्रुमैः । सुरगजस्य ऐरावतस्य गतं प्राप्तिरनुमीयते (हरिचन्दनविशेषणैः काव्यलिङ्गमुन्नेयम्) ॥ ४७

**जलदेति ॥** इहास्मिन्नद्रौ जलदजालघनैः मेघवृन्दसान्द्रैः असिता-श्मनामिन्द्रनीलानां मरीचिभिः दीधितिभिः । नि । 'भानुः करो मरीचिः स्त्री-

भवति दीप्तिरदीपितकन्दरा तिमिरसंवलितेव विवस्वतः ॥ ४८

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनान्तरायैः ॥ ४९

माभूवन्न पथहरास्तवेन्द्रियाश्वा-
स्सन्तापे दिशतु शिवश्शिवां †प्रसक्तिम् ।

---

पुंस्त्रयोर्दीधितिः स्त्रिया' मित्यमरः । उपहतप्रचया विघट्टितसङ्घाता अत एव अदीपितकन्दरा अप्रकाशितगह्वरा विवस्वतो दीप्तिः तिमिरैस्संवलिता व्यामिश्रितेव भवतीत्युत्प्रेक्षा ॥ ४८

**भव्य इति ॥** इहाद्रौ भव्यः शान्तो भवन्नपि मुनेः व्यासस्य शासनेन आज्ञया क्षात्रे पथि क्षत्रियमार्गे । तेजस्वितायां स्थितः गृहीतशस्त्र एवेत्यर्थः । तथा हतप्रमादः अप्रमत्तस्सन् तपस्य तपश्चर । तपस्येति 'कर्मणो रोमन्थतपोभ्यां वर्तिचरो'रिति क्यङ् । तदन्ताद्धातोर्लोट् । न च सर्वभूतहितकारिणो मे प्रमादः किं करिष्यतीति विश्वसितव्यमित्यर्थान्तरन्यासेनाह—प्रायेणेति । हि यस्मात् प्रायेण बाहुल्येन । नि । 'प्रायो वयस्यनशने मृत्यौ बाहुल्यतुल्ययो'-रिति हेमचन्द्रः । करोतीति करः हितार्थस्य करः तस्मिन् विधौ व्यापारे सत्यपि विद्यमानेऽपि श्रेयांसि अन्तरायैर्विना लब्धुमसुखानि अशक्यानीत्यर्थः अत एव 'शकधृषेऽत्यादिना' असमानकर्तृकेऽपि तुमुन् । अकारणवैरिणस्सर्वत्र सर्वस्यापि सन्तीति भावः ॥ ४९

**माभूवन्निति ॥** तव इन्द्रियाण्येव अश्वाः वाजिनः ते अपथेन हरंतीत्यपथहराः माभूवन् अपन्थानं मा नैषुरित्यर्थः । 'माङि लुङि'त्याशीरर्थे लुङ् । सन्तापे तपः क्लेशे सति । शिव ईश्वरः शिवां साधीयसीं प्रसक्तिं प्रवृत्तिमुत्साहं

---

† प्रसत्तिम् ॥

रक्षन्तस्तपसि बलं च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥ ५०

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥ ५१

तमनतिशयनीयं सर्वतस्सारयोगा-
दविरहितमनेके नाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसा शंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ ५२

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये लक्ष्मीपदलाञ्छने
पञ्चमस्सर्गः ॥

---

दिशतु ददातु । किं चेति चार्थः । लोकपालाः इन्द्रादयः तपसि विषये बलं शक्तिं रक्षन्तः वर्धयन्तस्सन्त इत्यर्थः । कल्याणीं साध्वीं क्रियां अनुष्ठानं अधिकफलां क्रियासुः कुर्वन्तु । करोतेराशिषि लोट् ॥ ५०

**इतीति ॥** प्रियार्हे प्रीतियोग्ये राजराजभृत्ये यक्षे इति पूर्वोक्तं प्रियं हितं च । वचनमिति शेषः । उक्त्वा सपदि स्वं स्वकीयं धाम स्थानं गतवति सति पृथासुतः अर्जुनः । सोत्कण्ठं सौत्सुक्यं किमपि प्रदध्यौ चिन्तयामास । तथाहि—सद्वियोगः सज्जनविप्रयोगः । भृशं अरतिं व्यथां सन्धत्ते करोतीत्यर्थः । अर्थान्तरन्यासः ॥ ५१

**तमिति ॥** अकृशाः पूर्णा लक्ष्म्यश्शोभा यस्य सः अकृशलक्ष्मीरिति बहुवचनाश्रितो बहुव्रीहिः । एवंचे 'दुरःप्रभृतिभ्यः क'बिति कप्प्रत्ययानवकाशः । तत्र लक्ष्मीशब्दस्यैकवचनान्तस्यैव पाठात् । नापि 'नद्यृतश्च' त्यस्यावकाशः ।

उरः प्रभृति पाठसामर्थ्यादेव । शैषिकस्तु वैभाषिक इत्यविरोधः । सोऽर्जुनः । सर्वतः सर्वत्र सारयोगादुत्कृष्टवस्तुसम्बन्धात् । अन्यत्र बलयोगात् । नि । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रि' ष्वित्युभयत्राप्यमरः । अनतिशयनीयं अनतिक्रमणीयं अनेकेन बहुना अङ्कभाजा समीपगतेन शीघ्रभाविनेति यावत् । फलेन कार्यसिद्ध्या । अविरहितमशून्यम् । कार्यसिद्धेरवश्यं साधकमित्यर्थः । अकृशमतनुं चेतसा आशंसितं प्राप्तमिष्टं तं शैलं इन्द्रकीलं । स्वमात्मीयम् । पुरुषस्य कारः कर्म तं पुरुषकारं उक्तविशेषणविशिष्टं पौरुषमिव अभ्यासमाद अभिजगाम । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकै'रिति लक्षणात् ॥ ५२

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां पञ्चमस्सर्गः ॥

## ॥ षष्ठस्सर्गः ॥

रुचिराकृतिः कनकसानुमथो परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितस्स तमारुरोह पुरुहूतसुतः ॥ १

तमनिन्द्यवन्दिन इवेन्द्रसुतं विहितालिनिक्कणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा जगतीरुहोऽवचकरुः कुसुमैः ॥ २

---

अव—पार्थस्तमद्रिमासाद्य किमकरोदित्यत्राह—

**रुचिरेति** ॥ अथो आसादनानन्तरं रुचिराकृतिः सौम्यविग्रहः धृतसत्पथः अवलम्बितसन्मार्गः । आकारानुगुणगुणवानित्यर्थः । 'यत्राकृतिस्तत्र गुणा' इति सामुद्रिकाः । उपमानेऽपि समानमेतत् । सः पुरुहूतसुतोऽर्जुनः कनकविकारास्सानवो यस्य तं कनकसानुं गरुडसावर्ण्यार्थमिदं विशेषणम् । 'समुदायविकार षष्ठ्या'श्चेति बहुव्रीहिः । उत्तरपदलोपश्च । तमिन्द्रनीलं परमः पुमान्विष्णुः पततां पतत्रिणां पतिं गरुडमिव । त्रिभिः पथिभिर्गच्छतीति त्रिपथगा भागीरथी । 'अन्येष्वपि दृश्यत' इति डप्रत्ययः । उपपदसमासः । उत्तरपदसमासश्च । तां अभितोमुखमारुरोह । नि । 'समीपोभयतश्शीघ्रसाकल्याभिमुखेभित' इत्यमरः । प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरासजससैरुदिते'ति लक्षणात् ॥

अव—अथास्य कार्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति—

**तमिति** ॥ अलिनिक्कणाः जयध्वनय इव ते विहिता यैस्ते तथोक्ताः । पवनेन वायुना ईरिताः नुन्नाः । अतएवाकुला लोला विजिह्मा वक्राश्च शिखा मौळ्य इव शिखा अग्राणि येषां ते तथोक्ताः । नि । 'शिखा ज्वालाकेंभा केकिशिखा शाखाग्रमौळि' ष्विति वैजयन्ती । जगतीरुहो भूरुहः । क्विप् । अनिन्द्याः अनवद्याः । प्रसिद्धा इत्यर्थः । ये वन्दिनः स्तुतिपाठकाः त इव तमिन्द्रसुतं अर्जुनं कुसुमैरवचकरुः । अभिववृषुरित्यर्थः । ते हि राजप्रवेशे जयशब्दपूर्वकं कुसुमैरवकिरन्ति । 'ऋच्छत्यृता' मिति गुणः । अत्र किरतेः वृष्ट्यर्थत्वात् कुसुमानां

अवधूतपङ्कजपरागकणास्तनुजाह्नवीसलिलवीचिभिदः ।
परिरेभिरेऽभिमुखमेत्य सुखाः सुहृदस्सखायमिव तं मरुतः ॥ ३

उदितोपलस्खलनसंवलिताः स्फुटहंससारसविरावयुजः ।
मुदमस्य माङ्गलिकतूर्यकृतां ध्वनयः प्रतेनुरनुवप्रमपाम् ॥ ४

अवरुग्णतुङ्गसुरदारुतरौ निचये पुरस्सुरसरित्पयसाम् ।
स ददर्श वेतसवनाचरितां प्रणतिं बलीयसि समृद्धिकरीम् ॥ ५

---

करणत्वं । विक्षेपार्थत्वे तु कर्मत्वमेव । यथा—कटाक्षान् वामाक्षि किरतीति । दृश्यते च धातूनामर्थभेदात्कारकव्यत्ययः । यथा—सिञ्चतेः क्षरणार्द्रीकरणयोरर्थयोर्द्रवद्रव्यस्य कर्मत्वकरणत्वे । यथा—'मेघोऽमृतं सिञ्चती सिञ्चती सामृतैर्वपु'रिति ॥ अत्र वाक्यसमासगतयोरुपमयोः साध्यसाधनभावादङ्गाङ्गिभावेन सङ्करः ॥ २

**अवधूतेति ॥** अवधूताः प्रेरिताः पङ्कजपरागकणाः यैस्ते तथोक्ता इति सौरभ्योक्तिः । तनूः जाह्नव्यास्सलिलवीचीः भिन्दन्तीति तथोक्ता इति शैत्योक्तिः । सुखयन्तीति सुखास्सुखस्पर्शा इति मान्द्योक्तिः । पचाद्यच् । मरुतो वाताः तमर्जुनं सुहृदस्सखायः सखायमिवाभिमुखमेत्यागत्य परिरेभिरे आलिङ्गितवन्तः ॥ निवातप्रदेशेभिमुखवायुसिद्धिसूचकः ॥ ३

**उदितेति ॥** उदितोपलेषु उन्नतपाषाणेषु स्खलनेन प्रतिघातेन संवलिताः चूर्णिताः । अतस्तूर्यघोषवत् घुमघुमायमाना इत्यर्थः । स्फुटैः हंसानां सारसानां च विरावैर्युज्यन्त इति तथोक्ताः । क्विप् । अनुवप्रं अपामधःपतन्तीनामिति शेषः । ध्वनयः अस्यार्जुनस्य मङ्गळं प्रयोजनमेषां माङ्गलिकाः । 'प्रयोजन' मिति ठञ् । तैस्तूर्यैः कृतां मुदं हर्षं प्रतेनुः । अत्रान्यस्यान्यकार्यकरणासम्भवात्तूर्यकृतमुत्सदृशीं मुदमिति प्रतिबिम्बाक्षेपान्निदर्शनालङ्कारः ॥ ४

**अवरुग्णेति ॥** सोऽर्जुनः पुरोऽग्रे । अवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतदेवदारुद्रुमे । बलीयसि बलवत्तरे । 'मत्वन्तादीयसुनिमतोर्लुक् । सुरसरित्पयसां निचये पूरे विषये । वेतसवनेन वानीरवनेनाचरिताम् । नि । 'अथ वेतसे रथाभ्रपुष्प निचुळशीतवानीरवञ्जुळा' इत्यमरः । समृद्धिकरीं श्रेयस्करीं । लोके तथा दृष्टामित्यर्थः । प्रणतिं ददर्श । या सर्वलोकदृष्टान्तभूतेति भावः ॥ ५

विबभूव नालमवलोकयितुं परितस्सरोजरजसारुणितम् ।
सरिदुत्तरीयमिव संहतिमत्स तरङ्गरङ्गि कलहंसकुलम् ॥ ६

दधति क्षतीः परिणतद्विरदे मुदितालियोषिति मदस्रुतिभिः ।
अधिकां स रोधसि बबन्ध धृतिं महते रुजन्नपि गुणाय महान् ॥

अनुहेमवप्रमरुणैस्समतां गतमूर्मिभिस्सहचरं पृथुभिः ।
स रथाङ्गनामवनितां करुणैरनुबध्नतीमभिननन्द रुतैः ॥ ८

---

**विबभूवेति** ॥ सोऽर्जुनः परितः सरोजरजसा कमलरेणुना अरुणितं । उत्तरीयं च कुङ्कुमादिना अरुणितम् । संहतिमत्सङ्घवत् नीरन्ध्रमित्यर्थः । तरङ्गेषु रङ्गति चरतीति तरङ्गरङ्गि भङ्गशोभि च । सरितः गङ्गायाः उत्तरीयं स्तनांशुकमिव स्थितं कलहंसकुलं कादम्बसमूहं अवलोकयितुं अलं अत्यर्थं न विबभूव न शशाक । तत्सौन्दर्यस्योद्वेलत्वादिति भावः ॥ ६

**दधतीति** ॥ सोर्जुनः क्षतीः क्षतानि दधति । कुतः? परिणता तिर्यग्दन्तप्रहारिणो द्विरदा यस्मिन् तस्मिन् । नि । 'तिर्यग्दन्तप्रहारी तु गजः परिणतो मत' इति हलायुधः । मदस्रुतिभिः मदधाराभिः मुदितालियोषिति सन्तोषितभ्रमरवनिते रोधसि अधिकां धृतिं प्रीतिं बबन्ध । निश्चलीकृतवानित्यर्थः । तथाहि—महान् जनः रुजन् पीडयन्नपि महते गुणायोत्कर्षाय भवति । महत्कृता पीडापि शोभावहैवेत्यर्थः । तद्युक्तं गजरुग्णस्यापि रोधसः प्रीतिकरत्वमिति भावः॥

**अन्विति** ॥ सोर्जुनः अनुहेमवप्रं कनकसानुसमीपे । समीपार्थेऽव्ययीभावः । अरुणैः कनककान्त्युपरञ्जनादिति भावः । पृथुभिरूर्मिभिः । † समतां तुल्यरूपतां गतं सादृश्याहुर्विवेदनीयमिति भावः । सहभूतं चरं सहचरं प्रियम् । सहशब्दस्य पचाद्यन्तेन चरशब्देन समासः । करुणैर्दीनैः रुतैः कूजितैः अनुबध्नतीमन्विष्यन्तीं । रथाङ्गनामवनितां चक्रवाकीं अभिननन्द प्रकृष्टप्रेमदर्शनात् कस्य वा नानन्द इति भावः । अत्र तावदूर्मीणां स्वधावलयत्यागेनारुण्यस्वीकारात्त-

---

† भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियामित्यूर्मिशब्दस्य पुंस्त्रीलिङ्गताभिधानादत्र पुल्लिङ्गता बोध्या ॥

सितवाजिने निजगदू रुचयश्चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि स्फुरितं मनोगतमिवाकृतयः ॥ ९

उपलाहतोद्धततरङ्गधृतं जविना विधूतविततं मरुता ।
स ददर्श कैतकशिखाविशदं सरितः प्रहासमिव फेनमपाम् ॥१०

बहुबर्हिचन्द्रकनिभं विदधे मुदमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं विकसद्विलोचनशतं सरितः ॥ ११

---

द्गुणालङ्कारः । श्लो । 'तद्गुणस्स्वगुणत्यागादन्योत्कृष्टगुणाहृति' रिति लक्षणात् । तन्मूला चेयं चक्रवाक्यास्स्वकान्ते तरङ्गभ्रान्तिरिति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावेन सङ्करः ॥ ८

**सितवाजिन इति ॥** चलवीचीनां रागो रञ्जनं वर्णान्तरापादनं तस्य रचना क्रिया तत्र पटवस्समलाः रुचयः प्रभाः अम्भसि निमग्नमपि मणिजालं स्वाश्रयभूतमिति भावः । मनोगतं स्फुरितं रोषादिविकारं आकृतयो भ्रूभङ्गादिबाह्यविकारा इव सितवाजिने अर्जुनाय निजगदुः ज्ञापयामासुरित्यर्थः । आकृत्या हि मनोगतं विचक्षणा जानन्तीति भावः ॥ ९

**उपलेति ॥** उपलैराहताः अतएव उद्धताश्च ये तरङ्गास्तैः धृतं निर्गमनिरोधादिति भावः । जविना वेगवता मरुता वायुना । पूर्वं विधूतं कम्पितं पश्चाद्विततं विस्तारितं च कैतकस्य शिखावदग्रवत् विशदम् । अपां फेनं डिण्डीरं । नि । 'डिण्डीरोऽब्धिकफःफेन' इत्यमरः । सरितः प्रहासमट्टहासमिवेत्युत्प्रेक्षा । सोर्जुनो ददर्श ॥ १०

**बर्हीति ॥** बर्हिचन्द्रकनिभं मयूरमेचकसदृशम् । नि । 'समौ चन्द्रकमेचका' वित्यमरः । बह्वनेकं दानपयसां पटलम् । बहवो मदाम्बुबिन्दव इत्यर्थः । अवगाढमन्तःप्रविष्टं जलार्थमवतीर्णमित्यर्थः । गाहेः कर्तरि क्तः । इभपतिमीक्षितुं विकसदुन्मिषत्सरितो विलोचनशतमिवेत्युत्प्रेक्षा । अस्यार्जुनस्य धृतिं प्रीतिं विदधे चकार ॥ ११

प्रतिबोधजृम्भणविभिन्नमुखी पुलिने सरोरुहदृशा ददृशे ।
पतदच्छमौक्तिकमणिप्रकरा गळदश्रुबिन्दुरिव शुक्तिवधूः ॥ १२

शुचिरप्सु विद्रुमलताविटपस्तनुसान्द्रफेनलवसंवळितः ।
स्मरदायिनः स्मरयति स्म भृशं दयिताधरस्य दशनांशुभृतः ॥१३

उपलभ्य चञ्चलतरङ्गधृतं मदगन्धमुत्थितवतां पयसः ।
प्रतिदन्तिनामिव स सम्बुबुधे करियादसामभिमुखान्करिणः ॥

---

**प्रतिबोधेति ॥** प्रतिबोधः स्फुटनं निद्रापगमश्च तेन यज्जृम्भणं उच्छूनता जृम्भा च तेन विभिन्नमुखी विश्लिष्टाग्रा विवृतास्या च अतएव पतन् निस्सरन् अच्छः स्वच्छो मौक्तिकमणीनां प्रकरः स्तोमो यस्यास्सा तथोक्ता। अत एव गळदश्रुबिन्दुरिव स्थितेत्युत्प्रेक्षा। शुक्तिर्वधूरिव शुक्तिवधूः पुलिने शयनीय इवेति भावः। सरोरुहदृशा अर्जुनेन ददृशे दृष्टा । अत्र प्रतिबोधादिश्लिष्टपदोपात्तानां प्रकृताप्रकृतार्थानां शुक्तिवध्वोश्चोपमारूपकयोस्साधकबाधकाभावात्सन्देहसङ्करालङ्कारः। तत्सापेक्षा चाश्रुगळनोत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सङ्करः ॥

**शुचिरिति ॥** अप्सु जले शुचिः स्वच्छः तनुभिस्सान्द्रैश्च फेनस्य लवैः शकलैः संवळितः सङ्गतः। विद्रुमलतायाः विटपः पल्लवः। नि। 'विटपः पल्लवे षिद्गे विस्तारे स्तम्बशाखयो' रिति विश्वः। स्मरदायिनः कामोद्दीपकस्य दशनांशुभृतः दन्तकान्तिकलितस्येत्यर्थः । दयिताधरस्य 'अधीगर्थे' त्यादिना कर्मणि षष्ठी। भृशं स्मरयति स्म 'लट्स्मे' इति भूतार्थे लट्। 'मितां ह्रस्व' इति ह्रस्वः। स्मरणालङ्कारः ॥ १३

**उपलभ्येति ॥** सोर्जुनः चञ्चलतरङ्गैः धृतं तत्सङ्क्रान्तमित्यर्थः। मदगन्धमुपलभ्याघ्राय पयसः उत्थितवतां रोषादिति शेषः । करियादसां कर्याकाराणां यादसाम्। शाकपार्थिवादिषु द्रष्टव्यः। प्रतिदन्तिनामिव अभिमुखानभियातानित्यर्थः। करिणस्सम्बुबुधे ददर्शेत्यर्थः ॥ १४

स जगाम विस्मयमुदीक्ष्य पुरस्सहसा समुत्पिपतिषोः फणिनः ।
प्रहितं दिवि प्रजविभिश्श्वसितैश्शरदभ्रविभ्रममपां पटलम् ॥ १५

स ततार सैकतवतीरभितश्शफरीपरिस्फुरितचारुदृशः ।
ललितास्सखीरिव बृहज्जघनास्सुरनिम्नगामुपयतीस्सरितः ॥ १६

अधिरुह्य पुष्पभरनम्रशिखैः परितः परिष्कृततलां तरुभिः ।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेश्शुचमाससाद स वनान्तभुवम् ॥

अनुसानु पुष्पितलताविततिः फलितोरुभूरुहविविक्तवनः ।

---

**स इति ॥** सोऽर्जुनः पुरोऽग्रे । सहसा समुत्पिपतिषोः समुत्पतितुमिच्छोः । पतेस्सन्नन्तादुप्रत्ययः । तनिपति दरिद्रादिभ्यस्स न इड्वा वक्तव्यः । इति विकल्पादिडागमः । फणिनः सर्पस्य । प्रजविभिः अतिवेगवद्भिः । श्वसितैः फूत्कारैः । दिवि आकाशे प्रहितं प्रेरितम् । शरदभ्रस्य विभ्रम इव विभ्रमः सौन्दर्यं यस्य तत् तद्वच्छुभ्रं व्यापकं चेत्यर्थः । अपां पटलं पूरं उदीक्ष्य विस्मयं जगाम । अत्रोपमानुप्राणिता स्वभावोक्तिरलङ्कारः ॥ १५

**स इति ॥** सोऽर्जुनः । सैकतवतीः पुलिनवतीः । अभितः शफरीणां मत्स्यीनां परिस्फुरितान्येव चारवो दृशो यासां ताः । सुरनिम्नगां गङ्गां उपयतीः भजन्तीः । इणश्शतर्युगित्वात् ङीप् । अतएव बृहज्जघनाः ललितास्सखीरिव स्थितास्सरितस्ततार अतिचक्राम ॥ १६

**अधिरुह्येति ॥** सोऽर्जुनः । अधिरुह्य अर्थाद्गिरिमिति शेषः । पुष्पभरेण नम्रशिखैः नताग्रैस्तरुभिः परितः परिष्कृततलां भूषितस्वरूपां । नि । 'अधस्स्वरूपयोरस्त्री तलसि' त्यमरः । सम्परिभ्यां करोतौ भूषण इति सुडागमः । शुचिं शुद्धां अतएव मनसः प्रसत्तिमिव मूर्तं मनः प्रसादमिव स्थिताम् । तद्धेतौ तद्भावोत्प्रेक्षा । गिरेर्मूर्ध्नि वनान्तभुवमाससाद अन्तश्शब्दस्स्वरूपवचनः । नि । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिक' इति वैजयन्ती ॥ १७

**अनुसान्विति ॥** अनुसानु प्रतिसानु वीप्सार्थेऽव्ययीभावः । पुष्पितास्सञ्जातपुष्पाः लताविततयो यस्मिन् सः फलिता उरुभूरुहा येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन् तथोक्तः । नि । 'विविक्तौ पूतविजना' विल-

धृतिमाततान तनयस्य हरेस्तपसेऽधिवस्तुमचलामचलः ॥ १८

प्रणिधाय तत्र विधिनाथ धियं दधतः पुरातनमुनेर्मुनिताम् ।
श्रममादधावसुकरं न तपः किमिवावसादकरमात्मवताम् ॥ १९

शमयन् धृतेन्द्रियशमैकसुखश्शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे विमलः कलाभिरिव शीतरुचिः ॥

अधरीचकार च विवेकगुणादगुणेषु तस्य धियमस्तवतः ।

---

मरः । अचलः इन्द्रकीलः । हरेस्तनयस्य अर्जुनस्य तपसे तपश्चर्यार्थं अधिवस्तुं अधिष्ठातुं । धृतिक्रियापेक्षया समानकर्तृकत्वात्तुमुन् । अचलां धृतिं उत्साहमाततान । अत्राचलविशेषणपदार्थस्य धृतिकरणहेतुत्वात्काव्यलिङ्गमलङ्कारः । तल्लक्षणं तु—श्लो 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृत' मिति ॥ १८

**प्रणिधायेति ॥** अथ तत्राद्रौ विधिना योगशास्त्रानुसारेण धियं चित्तवृत्तिं प्रणिधाय ध्येयविषये नियम्य । नेर्गदेत्यादिना णत्वं । मुनितां दधतः तपस्यत इत्यर्थः । पुरातनमुनेः अर्जुनस्येत्यर्थः । असुकरं दुष्करं तपः कर्तुं श्रमं खेदं नादधौ न चकार । तथाहि—आत्मवतां मनस्विनां स्वायत्तवृत्तीनां अवसादकरं श्रान्तिजनकं किमिव न किञ्चिदित्यर्थः । इव शब्दो वाक्यालङ्कारे । यद्वा पुरातनस्य मुनेस्सम्बन्धिनीम्मुनितां दधतः तस्य असुकरं तपः श्रमं नादधौ ॥ १९

**शमयन्निति ॥** धृतमिन्द्रियशमो विषयव्यावृत्तिरेवैकं मुख्यं सुखं येन स तथोक्तः । आत्माराम इत्यर्थः । अन्यत्र धृतं कृतमिन्द्रियाणां शमस्सन्तापनिवर्तनमेकमद्वितीयं सुखमाह्लादश्च येन स तथोक्तः । शुचिभिर्विमलैर्गुणैर्मैत्र्यादिभिः अन्यत्र कान्त्यादिभिः । अघमयं पापरूपं तमः अज्ञानमन्यत्रान्धकारं च शमयन् । विवर्तयन् विमलः अमलिनः पापरहितः शुभ्रोन्यत्र सोर्जुनः प्रतिवासरं सुकृतिभिः सुकृतैस्तपोभिरित्यर्थः । 'स्त्रियां क्तिन्' कलाभिश्शीतरुचिश्चन्द्र इव ववृधे पुण्योपचितोऽभूदित्यर्थः ॥ २०

**अधरीचकारेति ॥** किञ्चेति चार्थः । विवेकस्तत्त्वावधारणं स एव गुणः तस्मात्तेन हेतुनेत्यर्थः । 'विभाषा गुणे स्त्रिया' मिति पञ्चमी । अगुणेषु काम-

प्रतिघातिनीं विषयसङ्गरतिं निरुपप्लवश्शमसुखानुभवः ॥ २१

मनसा जपैः प्रणतिभिः प्रयतस्समुपेयिवानधिपतिं स दिवः ।
सहजेतरौ जयशमौ दधती विभराम्बभूव युगपन्महसी ॥ २२

शिरसा हरिन्मणिनिभस्स वहन् कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः परिमृष्टमूर्धनि तमालतरौ ॥ २३

धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयन् शुचिभिः ।

---

क्रोधादिदोषेषु विषये । तद्विरोधार्थे नञा समासः । धियं चित्तवृत्तिं अस्तवतः निवारितवतः तस्यार्जुनस्य । निरुपप्लवः निर्बाधशमसुखानुभवः प्रतिघातिनीं सोपप्लवां विषयसङ्गरतिं शब्दाद्युपभोगरुचिं अधरीचकार । विषयनिस्पृहं चकारेत्यर्थः । उत्कृष्टसुखलाभस्य प्रकृष्टवैराग्यहेतुत्वादिति भावः ॥ २१

**मनसेति ॥** प्रयतः अहिंसादिनिरतः । मनसा ध्यानेन । जपैः विशिष्टमन्त्राभ्यासैः । प्रणतिभिर्नमस्कारैः । एवं मनोवाक्कायकर्मभिः । दिवोधिपतिं इन्द्रं समुपेयिवान् उपसेदिवान् सोर्जुनः । सहजेतरौ नैसर्गिकागन्तुकौ जीयते अनेनेति जयः वीररसः । 'एरच्' इत्यच् । शम्यते अनेनेति शमः जयश्च शमश्च जयशमौ वीरशान्तरसौ दधती पुष्णती । महसी तेजसी युगपद्विभरां बभूव बभार । 'भीह्रीभृहुवा' स्विति विकल्पादाम् प्रत्ययः श्लुवद्भावाद्द्वित्वं । अत्र युगपद्वीरशान्ताधिकरणत्वाभिधानादस्य लोकाद्भुतमहिमत्वं व्यज्यते ॥ २२

**शिरसेति ॥** हरिन्मणिनिभः मरकतमणिश्यामः । अभिषवणेन स्नानेन कृतजन्मनः जनिताः । पिशङ्गीरिति भावः । जटाः शिरसा वहन् सोर्जुनः । अरुणस्य अनूरोः दीधितिभिः किरणैः परिमृष्टमूर्धनि व्याप्तशिरसि तमालतरौ उपमां तमालतरोस्सादृश्यं ययावित्यार्थीयमुपमा । तरोरौपम्याधिकरणत्वात्तदपेक्षया सप्तमी ॥ २३

**धृतेति ॥** धृतहेतिः धृतायुधोऽपि अधृता जिह्ममतिः कुटिलबुद्धिर्येन सः । शुचिभिः निर्मलैः चरितैः मुनीन् अधरयन् अधः कुर्वन् वेषेणैव भीषणो

रजयाञ्चकार विरजास्समृगान्कमिवेशते रमयितुं न गुणाः ॥२४

अनुकूलपातिनमचण्डगतिं किरता सुगन्धिमभितः पवनम् ।
अवधीरितार्तवगुणं सुखतां नयता रुचां निचयमंशुमतः ॥ २५

नवपल्लवाञ्जलिभृतः प्रचये बृहतस्तरूनगमयतावनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिश्शयनीयतामुपयतीं वसुधाम् ॥

---

न तु कर्मणेति भावः । कुतः? विरजाः रजोगुणरहितः सोऽर्जुनः मृगान् रजयाञ्चकार रमयामास रञ्जेर्णौ । मृगरमणे न लोपो वक्तव्य इति वक्तव्यादनुनासिकलोपः† । तथाहि—गुणाः शमादयः कमिव रमयितुं नेशते कं वशीकर्तुं शक्नुवन्तीति भावः। अन्तश्शुद्धिरेव हि वरं विश्वासबीजं परस्य न वेषो नापि संस्तव इति भावः ॥ २४

अव—अथास्य त्रिभिश्श्लोकैस्तपस्सिद्धिमाहानुकूलेत्यादिभिः ॥

**अनुकूलेति ॥** अनुकूलपातिनं अनुकूलप्रसारिणं न तु प्रतिकूलपातिनं अचण्डगतिं मन्दगामिनं सुगन्धिं । गन्धस्येत्त्वे तदेकान्तग्रहणेऽपि कवीनां निरङ्कुशत्वात्समासान्त इकारः । अथ वा केचिदागन्तुकत्वेऽप्येकवचनेन समासान्तमिच्छन्ति । पवनमभितः सर्वतः किरता प्रवर्तयतेत्यर्थः । ऋतुरस्य प्राप्तः आर्तवः । 'समयस्तदस्य प्राप्त' मित्यधिकारे 'ऋतो रणि' त्यण्प्रत्ययः । स चासौ गुणः तिग्मत्वरूपः सोऽवधीरितस्तिरस्कृतो येन तं । अंशुमतो रवेः रुचां निचयं प्रभापटलं सुखतां सुखस्पर्शतां नयता प्रापयता । नयतिर्द्विकर्मकः ॥ २५

**नवेति ॥** प्रचये पुष्पापचयप्रसङ्गे । नवपल्लवा एवाञ्जलयः तान् बिभ्रतीति तथोक्ताम् । बृहतः उच्चान् तरून् अवनतिं नम्रतां गमयता 'गतिबुद्धी' त्यादिना तरूणां कर्मत्वं । प्रतिनिशं निशि निशि । शयनीयतामुपयतीं शयनस्थानीभूतामित्यर्थः । वसुधां भुवं मृदुभिः तृणैः स्तृणता आच्छादयता ॥ २६

---

† यद्यप्यत्र सिद्धान्तकौमुद्यां मृगरमणमाखेटकमित्युक्त्वा रमणादन्यत्र रञ्जयन्ति मृगान् तृणदानेनेत्युक्तं तथापि रमणशब्दस्य तदर्थकत्वानङ्गीकारेणास्य मूलस्य व्याख्यानस्य च प्रवृत्तिरिति बोध्यम् ॥

पतितैरपेतजलदान्नभसः पृषतैरपां शमयता च रजः ।
स दयालुनेव परिगाढकृशः परिचर्ययानुजगृहे तपसा ॥ २७

महते फलाय तदवेक्ष्य शिवं विकसन्निमित्तकुसुमं स पुरः ।
स जगाम विस्मयवशं वशिनां न निहन्ति धैर्यमनुभावगुणः ॥

तदभूरिवासरकृतं सुकृतैरुपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियश्शतयज्वनो वनचरावसतिम् ॥ २९

---

**पतितैरिति ॥** अपेतजलदादनभ्रान्नभसः आकाशात् पतितैः अपां पृषतैः बिन्दुभिः रजश्च शमयता । तपसा कर्त्रा दयालुनेवेत्युत्प्रेक्षा । दयालुताहेतुं सूचयति । परिगाढकृशः नियमेनातिक्षीणः सोऽर्जुनः परिचर्यया उक्तविधया-शुश्रूषया अनुजगृहे अनुगृहीतः । अनुग्रहोऽत्र सहकारित्वमेव । एवं सर्वभूतानु-कूल्यलिङ्गात्पचेलिमं तपोऽस्येति भावः । अस्य श्लोकत्रयस्याप्येकवाक्यत्वादुत्प्रेक्षैव प्रधानालङ्कारः ॥ २७

**महत इति ॥** सोऽर्जुनः महते फलाय श्रेयसे सस्याय च विकसत् प्रफुल्लं तत्पूर्वोक्तं शिवं सुखदं निमित्तमेव कुसुमं पुरोऽग्रे अवेक्ष्य दृष्ट्वा विस्मयवशं न जगाम । तथाहि—वशिनां वशीकृतेन्द्रियाणां अनुभाव एव गुणः सः धैर्यं धीरतां न निहन्ति न विफलयति । विस्मयादिविकारं न जनयतीत्यर्थः । जनने च तपः क्षीयेत । 'तपः क्षरति विस्मया' दिति स्मरणादिति भावः ॥ २८

**तदिति ॥** सुकृतैः तपोभिः करणैः अभूरिभिः कतिपयैरेव वासरैः दिवसैः कृतं निष्पादितं तत्पूर्वोक्तं वैभवं विभुत्वं अतोऽन्यस्य न भवतीत्यनन्य-भवं अन्यस्यासम्भवीत्यर्थः । पचाद्यजन्तोत्तरपदेन नञ् समासः । उपलभ्य निश्चित्य । आस्थितविषादाः प्राप्तभेदाः धियो येषां ते तथोक्ताः वनचराः । 'तत्पुरुषे कृतिबहुल'मिति बहुलग्रहणाल्लुक् । शतेन शतस्य वा मखानां यज्वनः शतक्रतोः । अत्र संख्येयविशेषलाभो यज्वसन्निधानादवगन्तव्यः । नि । 'यज्वा तु विधिनेष्टवा' नित्यमरः । 'सुयजोर्ङ्वनिप्' वसतिमुपतस्थुः प्रापुः ॥ २९

विदिताः प्रविश्य विहितानतयश्शिथिलीकृतेधिकृतकृत्यविधौ ।
अनपेतकालमभिरामकथाः कथयाम्बभूवुरिति गोत्रभिदे ॥ ३०

शुचिवल्कवीततनुरन्यतमस्तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः पुरुषस्तपस्यति तपन् जगतीम् ॥ ३१

स बिभर्ति भीषणभुजङ्गभुजः पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताश्चरितेन चातिशयिता मुनयः ॥ ३२

मरुतश्शिवा नवतृणा जगती विमलं नभो रजसि वृष्टिरपाम् ।

---

**विदिता इति ॥** वनचरा इत्यनुवर्तते । विदिताः ज्ञाताः अनुमतप्रवेशास्सन्तः इत्यर्थः । प्रविश्य विहितानतयः कृतप्रणामाः अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षात्मकस्य विधावनुष्ठाने शिथिलीकृते सति अनपेतकालमनतिक्रान्तकालं यथा तथा । गोत्रभिदे शक्राय इति वक्ष्यमाणप्रकारेण अभिरामकथाः श्रव्यवाचः । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्ययः । कथयाम्बभूवुः कथितवन्तः । अभिरामाः श्रुतिमधुराः कथा उक्तयः येषामिति वनचरविशेषणं वा ॥ ३०

**शुचीति ॥** शुचिना वल्केन वल्कलेन वीता छादिता तनुर्यस्य सः । तिमिरच्छिदां सूर्यचन्द्राग्नीनामन्यतम इव स्थित इत्युत्प्रेक्षा । अनघः पुरुषः । हे मघवन् भवतः गिरौ इन्द्रकीले जगतीं भुवं तपन् तापयन् महते जयाय तपस्यति तपश्चरति । 'कर्मणो रोमन्थे'त्यादिना क्यङि लट् ॥ ३१

अव—जयाय तपस्यतीत्युक्तं तत्र युक्तिमाहुः—

**स इति ॥** भीषयेते इति भीषणौ । नन्द्यादित्वाल्ल्युप्रत्ययः । तौ च तौ भुजङ्गौ च ताविव भुजौ यस्य स तथोक्तः । स पुरुषः । विद्विषां भयविधायीत्यर्थः । अमलेन भयङ्करं पृथु महत् धनुः चापं बिभर्ति । अतो जयार्थी तस्य पुरुषस्य चरितेन आचारेण च चशब्दस्त्वर्थः । धृतानि सच्चरितानि यैस्ते मुनयः अतिशयिताः अतिक्रान्ताः ॥ ३२

अव—अथास्य तपस्सिद्धिं वर्णयति—

**मरुत इत्यादि ॥** मरुतो वाताः शिवाः सुखाः जगती पृथिवी नवतृणा शयनासनाद्यनुकूलेत्यर्थः । नभः विमलं मेघनीहारादिरहितं रजसि सति

गुणसम्पदानुगुणतां गमितः कुरुतेऽस्य भक्तिमिव भूतगणः ।।

इतरेतरानभिभवेन मृगास्तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये परवान्स तेन भवतेव नगः ।।

उरुसत्त्वमाह विपरिश्रमता परमं वपुः प्रथयती जयम् ।
शमिनोऽपि तस्य नवसङ्गमने विभुतानुषङ्गि भयमेति जनः ।।

ऋषिवंशजस्स यदि दैत्यकुले यदि वान्वये महति भूमिभृताम् ।
चरतस्तपस्तव वनेषु सहा न वयं निरूपयितुमस्य गतिम् ।। ३६

---

अपां वृष्टिः । भवतीति शेषः किं बहुना ? अस्य पुरुषस्य गुणसम्पदा भूतहितादि-गुणसम्पत्त्या अनुगुणतां अनुकूलतां गमितो वशीकृत इत्यर्थः । भूतगणः पृथिव्यादि भूतपञ्चकं भक्तिं सेवां कुरुत इवेत्युत्प्रेक्षा ।। ३३

**इतरेतरेति** ।। किञ्च मृगाः पशवः तं पुरुषं अन्ते अन्तिके सीदन्तीत्यन्तसदः अन्तेवासिनः शिष्याः । 'सत्सूद्विषे'त्यादिना क्विप् । नि । 'छात्रान्तेवासिनौ शिष्य' इत्यमरः । गुरुमिव इतरेतरेषामनभिभवेन अद्रोहेण उपासते । प्रचये पुष्पापचये तरवः अस्य विनमन्ति । करप्रचेया भवन्तीत्यर्थः । अस्येति सम्बन्धसामान्ये षष्ठी । किं बहुना ? स नगः इन्द्रकीलः भवतेव त्वयेव तेन पुरुषेण परवान् पराधीनः । तवेव तस्यापि विधेयो वर्तत इत्यर्थः ।। ३४

**उर्वीति** ।। किञ्च विपरिश्रमता आयासेऽपि श्रमराहित्यं । उरु महत्सत्त्वं अन्तस्सारमाह—दुर्बलस्य श्रमजयासम्भवादिति भावः । परममुत्तमं वपुः जयं प्रथयतीव । आकारेणैव जिष्णुत्वं गम्यत इत्यर्थः । शमिनः शान्तस्यापि तस्य नवसङ्गमने अपूर्वप्राप्तौ जनो विभुतायाः प्राभवस्यानुषङ्गि व्यापकं न तु हिंस्रत्वानुषङ्गीति भावः । भयमेति शान्तोद्भवं प्राभवं गमयतीति भावः । जनमिति पाठे जनं कर्म उपैतीत्यन्वयः ।। ३५

अव—अथेदृशोऽसौ क इति चेत्तन्न विद्म इत्याहुः—

**ऋषीति** ।। स पुरुषः । ऋषिवंशजः । वेति शेषः । काकुर्वा । यदि यद्वा दैत्यकुले । जात इति शेषः । यदि वा महति भूमिभृतां राज्ञां अन्वये जातः

विगणय्य कारणमनेकगुणं निजयाथवा कथितमल्पतया ।
असदप्यदस्सहितुमर्हसि नः क्व वनेचराः क्व निपुणा मतयः ॥

अधिगम्य गुह्यकगणादिति तन्मनसः प्रियं प्रियसुतस्य तपः ।
निजगूह हर्षमुदितं मघवा नयवर्त्मगाः प्रभवतां हि धियः ॥

प्रणिधाय चित्तमथ भक्तया विदितेऽप्यपूर्व इव तत्र हरिः ।
उपलब्धुमस्य मनसस्स्थिरतां सुरसुन्दरीरिति वचोऽभिदधे ॥ ३९

---

तव वनेषु तपश्चरतोऽस्य गतिं स्वरूपं मतमिति पाठे इच्छां निरूपयितुं निश्चेतुं वयं सहन्त इति सहाः । पचाद्यच् । न सहाः । स्म इति शेषः ॥ ३६

अव—अथापृष्टपरिभाषणापराधं परिहरन्ति ॥

**विगणय्येति ॥** अनेकगुणं बहुफलं इन्द्रत्वाद्यनेकफलसाधनयोग्यमित्यर्थः । कारणं तपोरूपकारणं विगणय्य विचार्य । अथवा निजया नैसर्गिक्या अल्पतया बालिश्येनाज्ञानेन कथितं अभिहितं नोऽस्माकं अदः इदं वचनमित्यर्थः । असदप्यसाध्वपि सहितुं सोढुं । 'तीषसहे' त्यादिना विकल्पादिडागमः । अर्हसि योग्यो भवसि । तर्हि सदेव किं नोक्तं तत्राहुः । वनेचराः क्व ? निपुणा मतयो विवेकबुद्धयः क्व ? नोभयं सङ्गच्छत इत्यर्थः । अज्ञानं नापराध्यतीति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ३७

**अधिगम्येति ॥** मघवा इन्द्रः । गुह्यकगणात् वनेचरसमूहात् । मनसः प्रियं प्रियसुतस्यार्जुनस्य तपः अधिगम्य ज्ञात्वा गुप्त्यपेक्षया समानकर्तृकत्वात् क्त्वाप्रत्ययः । उदितं तत्तपसो देवकार्यार्थित्वादुत्पन्नं हर्षं निजुगूह संवृतवान् । तथाहि—प्रभवतां प्रभूणां धियो बुद्धयः नयवर्त्मगाः नीतिमार्गानुसारिण्यः । अन्यथा मन्त्रभेदेन कार्यहानिस्स्यादिति भावः ॥ ३८

**प्रणिधायेति ॥** अथ हरिरिन्द्रः चित्तं प्रणिधाय विषयान्तरपरिहारेणात्मन्यवस्थाप्य तत्र अस्मिन्नर्जुने भक्तया आत्मश्रद्धावत्तया विदिते सत्यपि । उपलक्षणे तृतीया अपूर्व इव अविदिते इवेत्यर्थः । पूर्वादिभ्यो नवभ्यो वा इत्यस्य वैकल्पिकत्वान्न स्मिन्नादेशः । अस्यार्जुनस्य मनसः स्थिरतां दार्ढ्यं उपलब्धुं परीक्षितुमित्यर्थः । लोकप्रतीत्यर्थमिति भावः । सुरसुन्दरीः दिव्याङ्गनाः । इति वक्ष्यमाणप्रकारेण वचोऽभिदधे उवाच ॥ ३९

सुकुमारमेकमणु मर्मभिदामतिदूरगं युतममोघतया ।
अविपक्षमस्त्रमपरं कतमद्विजयाय यूयमिव चित्तभुवः ॥ ४०

भववीतये हतबृहत्तमसामवबोधवारि रजसश्शमनम् ।
परिपीयमाणमिव वो सकलैरवसादमेति नयनाञ्जलिभिः ॥ ४१

बहुधागतां जगति भूतसृजा कमनीयतां समभिहृत्य पुरा ।

---

**सुकुमारमिति** ॥ मर्मभिदां मर्मच्छेदिनामरुन्तुदानामस्त्राणां मध्य इत्यर्थः ! 'यतश्च निर्धारण' मिति षष्ठी । अपरमन्यत् । कतमत् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । यूयमिव युष्मत्सदृशमित्यर्थः । सुकुमारं न तु कठिनं अन्यत्तु कठिनं भवति । तथा एकं न तु बहु । तत्तु अनेकं भवति । तथा अणु सूक्ष्मं न तु स्थूलं। अलक्ष्यलक्ष्यप्रवेशित्वादिति भावः । तत्तु लक्ष्यलक्ष्यप्रवेशि । अतिदूरगं दूरलक्ष्यभेदि। तत्तु सन्निकृष्टलक्ष्यमात्रभेदि । तथा अमोघतया अमोघत्वगुणेन युतं युक्तं । न कदाचिल्लक्ष्यादपराध्यतीति भावः । तत्तु कदाचिल्लक्ष्यादपराध्यति । तथा । अविपक्षं असत्प्रतीकारं अन्यद्विद्यमानप्रतीकारं अस्त्रं चित्तभुवः कामस्य कर्तरि षष्ठी । विजयाय अस्तीति शेषः । न किञ्चिदस्तीत्यर्थः । अत्रोपमायाः परिष्कर्ता परिकर इति तयोरङ्गाङ्गिभावेन सङ्करः । साभिप्रायविशेषणत्वं परिकरः ॥ ४०

अथ—असामर्थ्यशङ्कां वारयति—

**भवेति** ॥ भववीतये संसारनिवृत्तये । हतबृहत्तमसां निरस्तमहामोहानां योगिनां सम्बन्धि रजोगुण एव रजो धूळिरिति श्लिष्टरूपकं । तस्य शमनं निवर्तकं अवबोधः तत्त्वज्ञानमेव वारि । तत् वो युष्माकं असकलैरसमग्रैः नयनान्येवाञ्जलयः तैः परिपीयमाणं निश्शेषं ग्रस्यमानमिवेत्युत्प्रेक्षा । अवसादं क्षयमेति मुक्तानपि बध्नन्तीनां वः कथमसामर्थ्यमिति भावः । अत्रोत्प्रेक्षारूपकयोस्सङ्करः ॥ ४१

**बहुधेति** ॥ किं च पुरा जगति लोके बहुधागतां नानामुखेन विप्रकीर्णां कमनीयतां चन्द्राद्युपमानद्रव्यगतलावण्यं समभिहृत्य सङ्गृह्य भवतीः विदधता सृजता भूतसृजा ब्रह्मणा जनता जनसमूहः । 'ग्रामजनबन्धुभ्यस्त'-

उपपादिता विदधता भवतीस्सुरसद्मयानसुमुखी जनता ॥ ४२

तदुपेत्य विघ्नयत तस्य तपः कृतिभिः कलासु सहितास्सचिवैः ।
हृतवीतरागमनसां ननु वस्सुखसङ्गिनं प्रति सुखा विजितिः ॥

अविमृश्यमेतदभिलष्यति स द्विषतां वधेन विषयाभिरतिम् ।
भववीतये न हि तथा सविधिः क्व शरासनं क्व च विमुक्तिपथः॥

---

लिति तल् । सुरसद्मयानसुमुखी स्वर्गलोकयात्राप्रवणा उपपादिता कृता । स्वर्गस्यापि यत्प्रसादात्सर्वलोकाशास्यत्वं तासां वः कथमसामर्थ्यमिति भावः । अत्राप्सरसां प्रकीर्णलावण्यसङ्ग्रहनिर्मितत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः ॥ ४२

अव—अथ कार्यांशमाह—

**तदिति** ॥ तत्तस्मात्समर्थत्वात्कलासु गीतवाद्यादिषु कृतिभिः कुशलैः सचिवैर्गन्धर्वैः सहिताः सङ्गताः उपेत्य तस्य पुरुषस्य तपो विघ्नयत विघ्नवत्कुरुत । निहतेत्यर्थः । विघ्नवच्छब्दान्मत्वर्थात्तत्करोतीति णिचि लोट् । णाविष्टवद्भावान्मतुपो लुक् । न चाशक्तिशङ्का कार्येत्यर्थान्तरन्यासेनाह—हृतेति। ननु सम्बोधने । हे अप्सरसः ! हृतानि वशीकृतानि वीतरागाणां निस्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिस्तासां वः युष्माकं अप्सरसां सुखसङ्गिनं सुखाभिलाषिणं पुरुषं प्रति विजितिर्विजयः सुखा सुखसाध्या न तु दुष्करा । एतेनायं सुखार्थी न मुमुक्षुरित्युक्तम् । अर्थान्तरन्यासः ॥ ४३

अव—अथ सुखसङ्गित्वलिङ्गमाह—

**अविमृश्यमिति** ॥ हे अप्सरसः! स पुरुषः द्विषतां शत्रूणां वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखं अतिशयमिति पाठे आधिक्यं अभिलष्यति वाञ्छति । 'वा भ्राश' इत्यादिना श्यन् प्रत्ययः । एतद्विषयासक्तत्वं अविमृश्यं अविचार्यम् । भवतीभिर्न सन्देग्धव्यमित्यर्थः । 'ऋदुपधाच्चाकॢपिचृते'रिति क्यप् । हि यस्मात् तथा सविधिः 'स बिभर्ति भीषणभुजङ्गभुज' इत्यादि श्लोकोक्तानुष्ठानप्रकारः भववीतये मुक्तये न भवति । कुत इत्याह—शरासनं धनुः क्व? विमुक्तिपथश्च क्व? परस्परं विरुद्धमित्यर्थः । न खलु हिंसासाध्या मुक्तिरिति भावः । अर्थान्तरन्यासः ॥ ४४

पृथुधाम्नि तत्र परिबोधि च मा भवतीभिरन्यमुनिवद्विकृतिः ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः ॥

आशंसितापचितिचारु पुरस्सुराणा-
मादेशमित्यभिमुखं समवाप्य भर्तुः ।
लेभे परां द्युतिममर्त्यवधूसमूह-
स्सम्भावना ह्यधिकृतस्य तनोति तेजः ॥ ४६

प्रणतिमथ विधाय प्रस्थितास्सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।

---

अव—न च शापभयमपि सम्भाव्यमस्मादित्याह—

**पृथ्विति ॥** पृथुधाम्नि महातेजसि तत्र तस्मिन् पुरुषे विषये अन्यमुनिवदन्यस्मिन् मुनाविव । 'तत्र तस्येवे'ति वतिप्रत्ययः । विकृतिः कोपविकारश्च भवतीभिः मा परिबोधि मा विज्ञाय । मा शङ्कीति यावत् । बुध्यतेः कर्मणि लुङ् । माङ्योगादाशीरर्थोऽडागमाभावश्च । तथाहि—स्वयशांस्यवतां रक्षतां यशोधनानामित्यर्थः । विक्रमवतां धियश्चित्तानि वधूषु स्त्रीषु विषये अघानि व्यसनानि । 'दुःखैनोव्यसनेष्वघ' मिति वैजयन्ती । न विमृशन्ति न स्पृशन्ती॰ त्यर्थान्तरन्यासः । स्त्रीहिंसायाश्शूराणां यशोहानिकरत्वान्न सर्वथा वो हिनस्ति स इत्यर्थः ॥ ४५

**आशंसितेति ॥** अमर्त्यवधूसमूहः अप्सरोगणः सुराणां पुरोऽग्रे आशंसितापचितिभिः अपेक्षितसम्भावनाभिः चारु यथा तथा । नि । 'क्षयार्चयोरपचिति' रित्यमरः । अभिमुखं समक्षं भर्तुः स्वामिनः । इति पूर्वोक्तमादेशं नियोगं समवाप्य लब्ध्वा परां द्युतिं लेभे । उचितं ह्येतत् । तथाहि—अधिकृतस्य क्वचिदधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥ ४६

अव—ततः किं कृतमित्यत आह—

**प्रणतिमिति ॥** अथ प्रणतिं विधाय सद्मनः इन्द्रभवनात् प्रस्थिताः प्रचलिताः पार्थविलोभनाय निष्क्रान्ताः स्तनभरैर्नमितान्यङ्गानि यासां ताः ।

अचलनलिनलक्ष्मीहारि नालम्बभूव
स्तिमितममरभर्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥ ४७

इति श्रीभारविकृतौ किरातार्जुनीये लक्ष्मीपदलाञ्छने
महाकाव्ये षष्ठस्सर्गः ॥

---

'अङ्गगात्रकण्ठेभ्यो वक्तव्य'मिति ङीप्। प्रीतिभाजः स्वामिसम्भावनया सन्तुष्टाः ताः अङ्गनाः अचलनलिनानां स्थिरकमलानां लक्ष्मीं हरतीति तत्तथोक्तम्। तद्वन्मनोहरमित्यर्थः। कुतः? स्तिमितं विस्मयान्निश्चलं अमरभर्तुरिन्द्रस्य अक्ष्णां सहस्रं कर्तृ द्रष्टुमलं समर्थं न बभूव। तासां सौन्दर्यसागरस्योद्वेलत्वादिति भावः। अत्रोपमालङ्कारः। तल्लक्षणं तु—श्लो। 'स्वतस्सिद्धेन भिन्नेन सम्मतेन च धर्मतः। साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमे' ति ॥ ४७

इति श्रीपदवाक्यप्रमाणपारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायां षष्ठस्सर्गः ॥

---

## ॥ सप्तमस्सर्गः ॥

श्रीमद्भिस्सरथगजैस्सुराङ्गनानां गुप्तानामथ सचिवैस्त्रिलोकभर्तुः ।
सम्मूर्छन्नलघुविमानरन्ध्रभिन्नः प्रस्थानं समभिदधे मृदङ्गनादः ॥ १

सोत्कण्ठैरमरगणैरनुप्रकीर्णान्निर्याय ज्वलितरुचः पुरान्मघोनः ।
रामाणामुपरि विवस्वतस्स्थितानां नासेदे चरितगुणत्वमातपत्त्रैः ॥

धूतानामभिमुखपातिभिस्समीरै-
रायासादविशदलोचनोत्पलानाम् ।

---

**श्रीमद्भिरिति ॥** अथ प्रस्थानानन्तरम् । श्रीमद्भिः शोभावद्भिः । सह-रथगजेन सरथगजाः तैः । 'तेन सहे'ति तुल्ययोग इति बहुव्रीहिः । त्रयाणां लोकानां भर्तुः त्रिलोकभर्तुरिन्द्रस्य । 'तद्धितार्थे'त्यादिना उत्तरपदसमासः । सचिवैर्गन्धर्वैः गुप्तानां सुराङ्गनानां प्रस्थानं गमनम् । अलघुषु महत्सु विमान-रन्ध्रेषु विमानानां रन्ध्रेषु कुक्षिकुहरेषु भिन्नः प्रतिध्वानैरनेकीभूतः अतएव सम्मूर्छन् व्याप्नुवन् मृदङ्गनादः समभिदधे आचख्यौ । पौरेभ्य इति शेषः । अस्मिन् सर्गे प्रहर्षिणीवृत्तम् । 'म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीय' मिति लक्षणात् ॥ १

**सोत्कण्ठैरिति ॥** सोत्कण्ठैरवेक्षणोत्सुकैरित्यर्थः । अमरगणैरनुप्रकी-र्णादाकीर्णात् । ज्वलितरुचः दीप्तकान्तेः मघोन इन्द्रस्य पुरादमरावत्या । निर्याय निर्गत्य । निपूर्वात् यातेः क्त्वोल्यप् । विवस्वतः उपरि स्थितानां रामाणां आत-पात्त्रायन्त इत्यातपत्त्राणि तैः । सुपीति योगविभागात्कप्रत्ययः । चरितगुणत्वं सार्थकत्वं नासेदे न प्रापे । तासां सूर्योपरिस्थितत्वेनातपाभावादातपात्त्राणा-सम्भवादिति भावः ॥ २

**धूतानामिति ॥** अभिमुखपातिभिः समीरैः प्रतिकूलवातैः धूताना-मिति दुर्निमित्तसूचनम् । आयासाद्गतिप्रयासात् अविकचेति पाठे ईषन्मुकुलित-

आनिन्ये मदजनितां श्रियं वधूना-
मुष्णांशुद्युतिजनितः कपोलरागः ॥ ३

तिष्ठद्भिः कथमपि देवतानुभावा-
दाकृष्टैः प्रजविभिरायतं तुरङ्गैः ।
नेमीनामसति विवर्तने रथौघै-
रासेदे वियति विमानवत्प्रवृत्तिः ॥ ४

कान्तानां कृतपुलकस्स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियं तनोति ॥ ५

---

दृशां वधूनां उष्णांशुद्युतिजनितः आतपकृतः कपोलानां रागः पाटलत्वम् । मदेन जनितां श्रियं तत्सदृशीं श्रियमित्यर्थः । अत एव निदर्शनालङ्कारः । आनिन्ये आनीतवान् । वधूरिति शेषः । आङ्पूर्वान्नयतेः कर्तरि लिट् जकारानुबन्धत्वादात्मनेपदम् ॥ ३

**तिष्ठद्भिरिति** ॥ कथमपि बाढम् । नि । 'कथमादि तथाप्यन्तं यत्नगौरवबाढयो' रिति वैजयन्ती । देवतानामनुभावात्सामर्थ्यात् तिष्ठद्भिः आपतद्भिरित्यर्थः । रथविशेषणमेतत् । प्रजविभिर्वेगवद्भिः तुरङ्गैरायतं दूरमाकृष्टैः रथौघैः वियति नेमीनां चक्रधाराणाम् । नि । 'चक्रधारा प्रधिर्नेमि 'रिति यादवः । विवर्तने भ्रमणे असति विमानवद्भिमानानामिवेत्युपमा । तत्र तस्येवेति वति प्रत्ययः । प्रवृत्तिर्गतिरासेदे प्राप्ता । सदेः कर्मणि लिट् ॥ ४

**कान्तानामिति** ॥ कान्तानां अप्सरसाम् । स्तनानामङ्गरागे कृतपुलकः कृतरोमाञ्चः । च्युताः प्रमृष्टास्तिलका येषां तेषु वक्त्रेषु । मौक्तिकाभः श्रमसलिलोद्गमः स्वेदोद्भेदः विभूषा भूषणं सम्पेदे सम्पन्नः । कर्तरि लिट् । तथाहि—रम्याणां स्वभावसुन्दराणां विकृतिरपि श्रियं तनोति । अतः स्वेदस्यापि भूषणत्वमुपपद्यत इति भावः ॥ ५

राजद्भिः पथि मरुतामभिन्नरूपै-
रुल्कार्चिस्स्फुटगतिभिर्ध्वजांशुकानाम् ।
तेजोभिः कनकनिकाषराजिगौरै-
रायामः क्रियत इव स्म सातिरेकः ॥ ६

रामाणामवजितमाल्यसौकुमार्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥ ७

सिन्दूरैः कृतरुचयस्स हेमकक्ष्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।

---

**राजद्भिरिति** ॥ मरुतां पथि आकाशे । राजद्भिः दीप्यमानैः अभिन्नरूपैरविच्छिन्नाकारैः । अतएव उल्कानामर्चींषीव स्फुटगतीनि दीप्तमार्गाणि तैः । कनकस्य निकाषो निकषणं तस्य राजिः रेखा तद्वद्गौरैररुणैः । नि । 'गौरोरुणे सिते पीत' इति विश्वः । ध्वजांशुकानां तेजोभिः आयामः तेषामेव दैर्घ्यं सातिरेकः सातिशयः क्रियतेस्मेव कृत इव । दीर्घा ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमा इवालक्ष्यन्तेत्युत्प्रेक्षा । सा चोल्काद्युपमानुप्राणिता ॥ ६

**रामाणामिति** ॥ मालैव माल्यं स्वार्थे ष्यञ् । यद्वा । 'मलधारण' इति धातोर्मल्यते धार्यत इति माल्यम् । 'ऋहलोर्ण्यत्' तस्य सौकुमार्यमवजितं येन तस्मिन् कुसुमादपि सुकुमार इत्यर्थः । रामाणां वपुषि आतपस्य । कृद्योगे कर्मणि षष्ठी । सहत इति सहं क्षमम् । पचाद्यच् । तस्य भावस्सहत्वं तत्संप्राप्ते सति अधिगतविस्मयैः गन्धर्वैः विधातुर्ब्रह्मणः । विधिषु सृष्टिषु कल्याणी साधीयसी उपकारकत्वादिति भावः । विचित्रता नानाविधत्वं प्रतीये अवगता ज्ञाता । प्रतिपूर्वादिणः कर्मणि लिट् ॥ ७

**सिन्दूरैरिति** ॥ सिन्दूरैः नागसम्भवाख्यैः रागद्रव्यैः । नि । 'सिन्दूरं नागसम्भव' मित्यमरः । कृतरुचयः अलङ्कृता इत्यर्थः । सह हेम्नः कक्ष्याभिः

साद‍ृश्यं ययुररुणांशुरागभिन्नै-
र्वर्षद्भिस्स्फुरितशतह्रदैः पयोदैः ॥ ८

अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्यन्तादहिममयूखमण्डलस्य ।
आशानामुपरिचितामिवैकवेणीं
रम्योर्मिं त्रिदशनदीं ययुर्बलानि ॥ ९

आमत्तभ्रमरकुलाकुलानि धुन्व-
न्नुद्भूतग्रथितरजांसि पङ्कजानि ।
कान्तानां गगननदीतरङ्गशीत-
स्सन्तापं विरमयति स्म मातरिश्वा ॥ १०

---

मध्यबन्धनैः सहेमकक्ष्याः । 'तेन सहेति तुल्ययोग' इति बहुव्रीहिः । नि । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धन' इत्यमरः । स्रोतोभिः सप्तभिर्मदनाडीभिः । श्लो । 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुति' रिति बालकाव्ये । करान्नासारन्ध्राभ्यामित्यर्थः । मदं क्षरन्तः वर्षन्तः त्रिदशगजाः अरुणस्यार्कस्य अंशूनां रागेण आरुण्येन भिन्नैः संसृष्टैः वर्षद्भिः स्फुरितशतह्रदैः स्फुरिततटित्कैः पयोदैः साद‍ृश्यं ययुरित्युपमालङ्कारः ॥ ८

**अत्यर्थमिति ॥** बलानि सैन्यानि अत्यर्थं दुरुपसदात् दुस्सहात् । अहिममयूखमण्डलस्य सूर्यबिम्बस्य पर्यन्तात्प्रांतात् । दूरमुपेत्य आगत्य आशानां उपरिचितां गुम्भितां एकवेणीमिव स्थितामित्युत्प्रेक्षा । गङ्गाकेशयोः शुक्लकृष्णतया साम्यासम्भवात् दिशामेकवेणीं हारलक्ष्मीमिवेति केचित् । नि । 'मुक्तायष्टिश्चैकवेणी हारभेदा इमे मता' इति । रम्या ऊर्मयस्तरङ्गा भंगयश्च यस्यास्तां त्रिदशनदीं मन्दाकिनीं ययुः प्रापुः ॥ ९

**आमत्तेति ॥** आमत्तैः भ्रमरकुलैः आकुलानि उद्भूतानि उत्थापितानि ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि पङ्कजानि धुन्वन् कम्पयन्

सम्भिन्नैरिभतुरगावगाहनेन

प्राप्योर्वीरनुपदवीं विमानपङ्क्तिः ।

तत्पूर्वं प्रतिविदधे सुरापगाया

वप्रान्तस्खलनविवर्तनं पयोभिः ॥ ११

क्रान्तानां ग्रहचरितात्पथो रथाना-

मक्षाग्रक्षतसुरवेश्मवेदिकानाम् ।

निस्संगं प्रथिभिरुपाददे विवृत्ति-

स्सम्पीडक्षुभितबलेषु तोयदेषु ॥ १२

---

सुरभिरित्यर्थः । गगननदीतरङ्गैः शीतः मातर्यन्तरिक्षे श्वयतीति मातरिश्वा वायुः । कान्तानां सन्तापं विरमयति स्म । शमयामासेत्यर्थः ॥ १०

**सम्भिन्नैरिति ॥** इभतुरगावगाहनेन हस्त्यश्वावलोडनेन सम्भिन्नैः संक्षुभितैः । सुरापगायाः पयोभिः कर्तृभिः । पदवीमनुपदव्यामित्यर्थः । 'लक्षणेत्थंभूते'त्यादिना कर्मप्रवचनीयत्वाद्द्वितीया ॥ उर्वीः विपुलाः विमानपङ्क्तीः प्राप्य सुराणामिति शेषः । तदेव पूर्वं तत्पूर्वमिदं प्रथमं यथा तथा । आकाशगङ्गायाः तटाभावादिति भावः । वप्रान्तेषु रोदोभूमिषु स्खलनानि तैः विवर्तनं प्रत्यावृत्तिः । नि । 'विप्रः पितरि ना नस्त्री क्षेत्रे रोधसि सासनी'ति वैजयन्ती † प्रतिविदधे चक्रे इत्यतिशयोक्तिः ॥ ११

**क्रान्तानामिति ॥** ग्रहैश्चरितात् सूर्यादिभिराश्रितात् । कर्मणि क्तः । पथः मार्गात् क्रान्तानां निष्क्रान्तानां अक्षाश्चक्राधारा दारुविशेषाः तेषामग्रैः क्षता दारिताः सुरवेश्मवेदिका यैस्तेषां रथानां प्रथिभिः नेमिभिः चक्रान्तैः । नि । 'चक्रं रथाङ्गं तस्यान्ते नेमिस्स्त्री स्यात्प्रधिः पुमा' नित्यमरः । सम्पीडेन नोदनेन क्षुभितानि जलानि येषां तेषु तोयदेषु निस्सङ्गमप्रतिघातं यथा तथा । विवृत्तिः परिभ्रमणं उपाददे स्वीकृतेत्यतिशयोक्तिः स्वभावोक्त्या संसृज्यते । सम्भिन्नक्षुभितेति पाठे सम्भेदो विमर्दः ॥ १२

---

† 'वप्रः पितरि केदारे वप्रः प्राकाररोधसो 'रिति वैजयन्ती । इति मुम्बापुस्तके॥

तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः ।
युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ १३

संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके निवृत्तिम् ।
पर्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्वोः ॥ १४

अप्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।

---

**तप्तानामिति** ॥ विषाणभिन्नाः गजदन्तक्षताः । नि ' विषाणं दन्तशृङ्गयो'रिति हलायुधः । अतएव क्षरन्तः स्रवन्तः घनाः तप्तानां सुरकरिणां प्रह्लादं उपदधिरे चक्रिरे । तथाहि । परोपकारे युक्तानां आसक्तानां महतां सतां रुजत्स्वपि पीडयत्स्वपि विषये कल्याणी हितकारिणी प्रवृत्तिः व्यापारो भवति । खल्वित्यर्थान्तरन्यासोऽलङ्कारः । ततो युक्तं मेघानां गजदन्तपाटितानामपि तदाह्लादकत्वमिति भावः । घनग्रहणाद्यतो घना दृढास्ततो न विशीर्णाः किन्तूपकृतवन्त इति तात्पर्यार्थः ॥ १३

**संवातेति** ॥ संवाता संवहता ' वा गतिगन्धनयो'रिति धातोश्शतृप्रत्ययः । अनिलेन कामिनेवेति भावः । दिव्यस्त्रीणां जघनेषु वरं श्रेष्ठं यदंशुकं तस्मिन् निवृत्तिं अपसरं मुहुर्नीयमाने सति पर्यस्यत् प्रसर्पत् पृथु विशालं मणिमेखलांशुजालं ऊर्वोर्युतकं चलनाख्यमिव । नि । 'युतकं संशये युग्मे यौतके चलनेऽपि चे'ति विश्वः । अन्तरे भवं आन्तरीयं अधोंशुकं । ' गहादिभ्य'श्चेति छप्रत्ययः । नि । ' अन्तरीयोपसंव्यानपरिधानान्यधोंशुक ' इत्यमरः ॥ १४

**अपीति** ॥ तुषारपातैः शीकरवर्षैः । नि । ' तुषारौ हिमशीकरा 'विति विश्वः । आर्द्रीकृततिलका अपि मार्जितविशेषका अपि शमितपरिश्रमाः अतएव

कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान्बहु सुकृतं हिनस्ति दोषः ॥ १५

यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।
आतेनुस्त्रिदशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभा मणीनाम् ॥ १६

संसिद्धाविति करणीयसन्निबद्धै-
रालापैः पिपतिषतां विलंघ्य वीथीम् ।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७

---

प्रह्लादं दिशन्तः आनन्दकारिणः पयोदाः कान्तानां कर्तरि षष्ठी । बहुमतिं तिलकार्द्रीकरणदोषेऽपि परिश्रमशमनेन प्रहर्षादानात्सत्कारमाययुः । तथाहि—अल्पीयान् अल्पः दोषः बहु प्रभूतं सुकृतमुपकारं न हिनस्ति न निहन्ति अर्थान्तरन्यासोऽलङ्कारः ॥ १५

**यातस्येति** ॥ ग्रथिततरङ्गं बद्धोर्मि यत्सैकतं तस्य आभेवाभा यस्य तस्मिन् विगतानि पयांसि यस्मात्तस्मिन्विपयसि निर्जले 'शेषाद्विभा'षेति विकल्पान्न समासान्तः । उरः प्रभृतिषु पाठस्तु पयश्शब्दस्यैकवचनान्तस्यैवेति न कश्चिद्विरोधः । वारिवाहजाले मेघवृन्दे विच्छेदं त्रुटिं यातस्य सुरधनुषः इन्द्रचापस्य त्रिदशवधूजनांगभाजां मणीनां तदङ्गसङ्गिविभूषामणीनामित्यर्थः । प्रभाः कान्तयः । सन्धानं आतेनुः चक्रुः । अत्राभरणप्रभाणामिन्द्रचापसन्धानासम्बन्धेपि सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः ॥ १६

**संसिद्धाविति** ॥ संसिद्धौ कार्यसिद्धिविषये इतीत्थं भाविना प्रकारेण कर्तव्यमितिकरणीयं तेन सन्निबद्धैः अनन्तरकरणीयार्थसम्बद्धैरित्यर्थः । आलापैराभाषणैः । उपलक्षितया । नि । 'स्यादाभाषणमालाप' इत्यमरः । दशशतानि संख्या येषु तानि लोचनानि यस्य सः दशशतलोचनः सहस्राक्ष इत्यर्थः । तस्य

आकीर्णा मुखनलिनैर्विलासिनीना-
मुद्धूतस्फुटविशदातपत्रफेना ।
सा तूर्यध्वनितगभीरमापतन्ती
भूभर्तुश्शिरसि नभोनदीव रेजे ॥ १८

सेतुत्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथान् जवेन ।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः ॥ १९

---

ध्वजिन्या सेनया पिपतिषतां पक्षिणां वीथिं मार्गं । नि । 'पित्सन्तो नभसङ्गमा' इत्यमरः । 'तनिपती'त्यादिना विकल्पादिडागमः । विलंघ्य जीवनमुदकमूयते वध्यते एष्विति जीमूताः ‡ पृषोदरादित्वात्साधुः । तैः अपिहितसानुः छादिततटः । तुङ्गतट इत्यर्थः । इन्द्रकीलः आसेदे प्राप्तः । सदेः कर्मणि लिट् ॥ १७

**आकीर्णेति ॥** विलासिनीनां मुखनलिनैः । उपमितसमासः । आकीर्णा व्याप्ता उद्धूतान्यूर्ध्वमुत्क्षिप्तानि स्फुटान्यसंकुचितानि विशदातपत्राणि श्वेतच्छत्राणि फेना इव यस्यास्सा तथोक्ता । तूर्यध्वनितैः वाद्यनिर्घोषैः गभीरं यथा तथा भूभर्तुः इन्द्रकीलस्य शिरसि आपतन्ती सा सेना नभोनदीव रेजे ॥ १८

**सेतुत्वमिति ॥** पयोमुचां विताने सेतुत्वं दधति सति संरम्भादाटोपाज्जवेन अभिपततः मेघवृन्दमधरीकृत्य धावत इत्यर्थः । तथाभूतान् रथान् नियमितैः आकृष्टैः रश्मिभिः प्रग्रहैः भुग्नाः आकुञ्चिताः घोणाः प्रोथाः येषां ते नि । 'कुञ्चितं नतं । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इति । 'किरणप्रग्रहौ रश्मी' इति 'घोणा तु प्रोथमस्त्रिया'मिति चामरः । अवनमंतीत्यवनामिनः अवनतपूर्वकायाः तुरङ्गाः कृच्छ्रेण महता प्रयासेन क्षितिमानिन्युरिति स्वभावोक्तिः ॥ १९

---

‡ जीवनस्योदकस्य मूतः पुटबन्धो येषामिति मुम्बापुस्तके ॥

माहेन्द्रं नगमभितः करेणुवर्याः
पर्यन्तस्थितिजलदा दिवः पतन्तः ।
सादृश्यं निलयननिष्प्रकम्पपक्षै-
राजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥ २०

उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन ।
आमूलादुपनदि सैकतेषु लेभे
सामग्र्यं खुरपदवी तुरङ्गमाणाम् ॥ २१

---

**माहेन्द्रमिति ॥** माहेन्द्रं नगमभितः इन्द्रकीलाभिमुखम् । 'अभितः परित' इत्यादिना द्वितीया । दिवः अन्तरिक्षात् पतन्तः आपतन्तः । पर्यन्तस्थिताः पार्श्वस्थाः जलदाः येषां ते करेणुषु वर्याः करेणुवर्याः श्रेष्ठा इत्यर्थः । 'न निर्धारण' इति षष्ठीसमासप्रतिषेधात्सप्तमीति योगविभागात्सप्तमीसमासः । निलयने स्थाने निष्प्रकम्पपक्षैः निश्चलपत्रैः जलनिधिशायिभिः नगेन्द्रैः मैनाकादिभिस्सादृश्यं आजग्मुरित्युपमा ॥ २०

**उत्सङ्ग इति ॥** महाद्रेः उत्सङ्गे मूर्धनि यत्समविषमं समं च विषमं च तस्मिन् समविषमे निम्नोन्नते । द्वन्द्वैकवद्भावः । वियदभिपातलाघवेन गगनसञ्चारपाटवेन सममेकरूपमारोहावरोहरहितमित्यर्थः । क्रान्तानां गच्छतां तुरङ्गमाणां खुरपदवी खुरपङ्क्तिः उपनदि नदीसमीपे 'अव्ययीभाव' श्चेति नपुंसकत्वाद्ध्रस्वत्वम् । सैकतेषु आमूलान्मूलमारभ्य दिव आरभ्येति यावत् । समग्रस्य भावः सामग्र्यं साकल्यं भावे ष्यञ् † लेभे । सैकतादन्यत्र निम्नेषु गगनसञ्चारेण समखुरस्पर्शाभावाद्विच्छिन्ना खुरसरणिः सैकते सर्वत्र समत्वादविच्छिन्नेत्यर्थः ॥२१

---

† मातरि षिच्चेति षित्वादेव ङीषि सिद्धे गौरादिषु मातामहीशब्दपाठात् षित्वप्रयुक्तस्य ङीषोऽनित्यत्वज्ञापनात् । ङीषभावः । अतएवाह वामनः । 'ष्यञः षित्करणादीकारो बहुल' मिति ॥

सध्वानं निपतितनिर्झरासु मन्द्रै-
　　स्सम्मूर्छन्प्रतिनिनदैरधित्यकासु ।
उद्ग्रीवैर्घनरवशङ्कया मयूरै-
　　स्सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥ २२

संभिन्नामविरळपातिभिर्मयूखै-
　　र्नीलानां भृशमुपमेखलं मणीनाम् ।
विच्छिन्नामिव वनिता नभोऽन्तराळे
　　वप्राम्भस्स्रुतिमवलोकयाम्बभूवुः ॥ २३

---

**सध्वानमिति ॥** सध्वानं सशब्दं निपतिताः निर्झराः प्रवाहाः यासु तासु । नि । 'प्रवाहो निर्झरो झर' इत्यमरः । अधित्यकासु नगोर्ध्वभूमिषु । नि । 'भूमिरूर्ध्वमधित्यके' त्यमरः । 'उपाधिभ्या' मित्यादिना त्यकन्प्रत्ययः । मन्द्रैः गम्भीरैः । नि । 'कलो मन्द्रस्तु गम्भीर' इत्यमरः । प्रतिनिनदैः प्रतिध्वानैः । सम्मूर्छन् वर्धमानः रथानां ध्वनिः घनरवशङ्कया गर्जितभ्रमेणेति भ्रान्तिमदलङ्कारः । 'उद्ग्रीवैः मयूरैः सोत्कण्ठं उपशुश्रुवे । श्रुतः शृणोतेः कर्मणि लिट् ॥ २२

**संभिन्नामिति ॥** अविरळपातिभिः निरन्तरप्रसारिभिः उपमेखलं कटकेष्वित्यर्थः । नि । 'अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धे सबन्धन'-इति यादवः । नीलानां मणीनां मयूखैः भृशं सम्भिन्नां एकीभूतां अतएव नभोऽन्तराळे विच्छिन्नामिव स्थितामित्युत्प्रेक्षा । वप्राम्भस्स्रुतिं प्रस्थोदकधारां वनिताः अवलोकयाम्बभूवुः । वप्राम्भस्स्रुतेः स्वच्छायापरित्यागेन इन्द्रनीलमणिकान्तिस्वीकाररूपतद्गुणोत्थापिता विच्छेदोत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सङ्करः । तेन च विच्छेदभ्रमरूपो भ्रान्तिमान् व्यज्यते ॥ २३

आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथंचिदीषुः ॥ २४

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं पर्यस्यन्नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा घर्मान्तक्षुभितजलेन जह्नुकन्या ॥

सम्भोगक्षमगहनामथोपगङ्गं बिभ्राणां ज्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहाया वृत्रारेरविरळशाद्वलां धरित्रीम् ॥

---

**आसन्नेति** ॥ धुरं गतास्तेषां धूर्गतानां नियंतॄणां धियमवमत्य अवज्ञाय आसन्नायां द्विपपदव्यां वनगजमार्गे यो मदानिलः तस्मै क्रुध्यन्तः तं प्रति कुप्यन्तः । 'क्रुधद्रुहे'त्यादिना सम्प्रदानत्वाच्चतुर्थी । सव्याजं सकपटं निजकरिणीभिः आत्तचित्ताः आकृष्टचित्ताः सुरकरिणः देवनागाः प्रस्थानं गमनं कथंचित् कष्टेन ईषुः अभिलेषुः ॥ २४

**नीरन्ध्रमिति** ॥ नीरन्ध्रं सान्द्रं पथिषु रथाङ्गैश्चक्रैः नुन्नं प्रेरितम् । नि । 'नुत्तनुन्नास्तनिष्ठ्यूत विद्धक्षिप्तेरितास्समा' इत्यमरः । पर्यस्यत् प्रसर्पत् नवसलिलमिव अरुणं रजः वहन्ती सा वाहिनी सेना घर्मान्ते प्रावृषि क्षुभितजला कलुषोदकेत्यर्थः । जह्नुकन्या गङ्गेव वनानि फलपुष्पप्रधानानि च तानि गहनानि जीर्णारण्यानि च तानि वनगहनानि आतेने व्यानशे । अत्र समासगतवाक्यगतोपमयोस्सजातीययोरङ्गाङ्गिभावेन सङ्करः ॥ २५

**संभोगेति** ॥ अथ वृत्रारेरिन्द्रस्य सहायाः सचिवाः गन्धर्वाः उपगङ्गं गङ्गायास्समीपे । अव्ययीभावस्य नपुंसकत्वाद्ध्रस्वत्वम् । सम्भोगक्षमगहनां उपभोगयोग्यवनां ज्वलिताः मणयो येषु तानि सैकतानि बिभ्राणां भृञः कर्तरि लटश्शानच् । च्युतैः स्वतः पतितैः कुसुमैराचितां व्याप्तां अविरलास्सान्द्राः शाद्वलाश्शादप्रायप्रदेशाः यस्यां तां धरित्रीं अध्यूषुः अधितष्ठुः । वसतेर्य-

भूभर्तुस्समधिकमादधे ततोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः ।
सम्भक्तौ किमसुलभं महोदयाना-
मुच्छ्रायं नयति यदृच्छया हि योगः ॥ २७

सामोदाः कुसुमतरुश्रियो विविक्ता-
स्सम्पत्तिः किसलयशालिनी लतानाम् ।
साफल्यं ययुरमराङ्गनोपभुक्ता-
स्सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८

---

जादित्वात्सम्प्रसारणम् । अत्र धरित्रीविशेषणपदार्थानामधिवासहेतुत्वादनेक - पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६

**भूभर्तुरिति ॥** तदा हरिसखवाहिनीनिवेशः गन्धर्वसेनाशिबिरम् । 'निवेशश्शिबिरोद्वाहविन्यासेषु प्रकीर्तित' इति शाश्वतः । भूभर्तुः इन्द्रकीलस्य उर्व्याः समधिकं पूर्वस्मादभ्यधिकं यथा तथा श्रीमत्तां श्रियमित्यर्थः । † आदधे जनयामास । तथाहि—महोदयानां महात्मनां सम्भक्तौ सम्यक्सेवायाम् । संसक्ता-विति पाठे सम्यक्सम्बन्धे इत्यर्थः । किमसुलभं न किञ्चिद्दुर्लभमित्यर्थः । यतः यदृच्छया दैवात् योगोऽपि उच्छ्रायमुत्कर्षं नयति । अत्र प्रकृतयदृच्छायोगस्यो-त्कर्षाधायकत्वाभिधानादप्रकृतभक्तियोगस्योत्कर्षाधायकत्वं कैमुत्यन्यायेनापत - तीति प्राकरणिकादप्राकरणिकसिद्धिरूपार्थापत्तिरलङ्कारः । तदुक्तम् — श्लो । 'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत् । कैमुत्यन्यायतस्सा स्यादर्थापत्ति-रलंक्रिये'ति ॥ २७

**सामोदा इति ॥** सामोदाः ससौरभाः कुसुमप्रधानास्तरवः । शाक-पार्थिवादिषु द्रष्टव्यः । तेषां श्रियस्समृद्धयः । विविक्ताः विजनप्रदेशाः । नि । 'विविक्तविजनच्छन्न निश्शलाकास्तथा रह' इति । 'विविक्तौ पूतविजनौ' इति चामरः । किसलयशालिनी नवपल्लवयुता लतानां सम्पत्तिः एता अमराङ्गनोप-भुक्तास्सत्यः साफल्यं ययुः । तथाहि—यया लक्ष्म्या करणेन परेषां उपकुरुते ।

† मत्वन्तोत्तरभावप्रत्ययस्य मतुप्प्रत्ययप्रकृत्यर्थार्थकत्वानियमादिति भावः ॥

क्लान्तोऽपि त्रिदशवधूजनः पुरस्ता-

ल्लीनाहिश्वसितविलोलपल्लवानाम् ।

सेव्यानां हतविनयैरिवावृतानां

सम्पर्कं परिहरति स्म चन्दनानाम् ॥ २९

उत्सृष्टध्वजकुथकङ्कटा धरित्री-

मानीता विदितनयैः श्रमं विनेतुम् ।

आक्षिप्तद्रुमगहना युगान्तवातैः

पर्यस्ता गिरय इव द्विपा विरेजुः ॥ ३०

प्रस्थानश्रमजनितां †विधाय निद्रा-

मामुक्ते गजपतिना सदानपङ्के ।

---

लक्ष्मीवानिति शेषः । सा लक्ष्मीः नान्येति भावः । परेषामित्यत्र अनुकरोति भगवतो नारायणस्येत्यादिवत् क्रियायोगेऽपि सम्बन्धसामान्ये षष्ठी ॥ २८

**क्लान्त इति** ॥ क्लान्तोऽपि त्रिदशवधूजनः पुरस्तादग्रे लीनानां संश्रितानां अहीनां श्वसितैः निश्वासैः विलोलाः पल्लवा येषां तेषां चन्दनानां सम्पर्कं हतविनयैः खलैः आवृतानां सम्भृतानां सेव्यानां प्रभूणां सम्पर्कमिव परिहरति स्म ॥ दुष्टवद्दुष्टसम्पृष्टा गुणाढ्या अपि त्याज्या इति भावः ॥ २९

**उत्सृष्टेति** ॥ उत्सृष्टाः आक्षिप्ताः ध्वजाः कुथा आस्तरणानि कङ्कटास्तनुत्राणि च येभ्यस्ते । नि । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयो'रिति । 'उरच्छदः कङ्कटको जागरः कवचोऽस्त्रिया' मिति चामरः । विदितनयैः शिक्षाभिज्ञैः यंतृभिः श्रमं क्लमं विनेतुमपनेतुं धरित्रीमानीताः निवेश्यमाना इत्यर्थः । द्विपाः युगान्तवातैराक्षिप्तानि उद्धृतानि द्रुमाणां गहनानि वनानि येभ्यस्ते पर्यस्ताः विपर्यासिताः गिरय इव विरेजुः शुशुभिरे ॥ ३०

**प्रस्थानेति** ॥ गजपतिना प्रस्थानश्रमेण जनितां निद्रां विहाय आमुक्ते

---

† विहाय ।

शय्यान्ते कुलमलिनां क्षणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥ ३१

आयस्तस्सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्धानं निहितशितांकुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥ ३२

आरोढुस्समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।
सम्मार्जन्नरुणमदस्रुती कपोलौ
सस्यन्दे मद इव शीकरः करेणोः ॥ ३३

---

अतएव सदानपङ्के गजमदयुक्ते । शय्यान्ते शयनीयदेशे । क्षणं विलीनं अलिनां मधुपानां कुलं । नि 'मधुलिण्मधुपालिन' इत्यमरः । संरम्भेण उत्थानसम्भ्रमेण च्युतं भ्रष्टं शृङ्खलं निगळमिवेत्युत्प्रेक्षा । नि । 'अथ शृङ्खला । अन्दुको निगळोऽस्त्री स्या'दित्यमरः । चकाशे शुशुभे ॥ ३१

**आयस्त इति ॥** वनगजदानगन्धोऽस्यास्तीति तथोक्तं रोधः परकूलमित्यर्थः । सम्प्राप्तुं गन्तुं आयस्तः उद्युक्तः प्रयत्नं कुर्वाण इत्यर्थः । 'यसु प्रयत्न' इति धातोः कर्तरि क्तः । किन्तु सुरसरिदोघेन गङ्गाप्रवाहेण रुद्धं वर्त्म यस्य सः नागो गजः—निहितः दत्तः शितस्तीक्ष्णः अङ्कुशः यस्मिन् तं । नि । 'अङ्कुशोऽस्त्री सृणिः स्त्रिया' मित्यमरः । मूर्धानं विधुन्वन् । रोषादिति भावः । यन्तारं न विगणयाञ्चकार ॥ ३२

**आरोढुरिति ॥** समवनतस्य जलपानार्थमानतपूर्वकायस्य करेणोः । गजस्य । वि 'करेणुरिभ्यां स्त्री नेभ' इत्यमरः । करेण पीतस्य शेषे पयसि आरोढुः हास्तिपकात् साशङ्कं सभयं समीरिते क्षिप्ते सतीत्यर्थः ॥ शीकरः अम्बुकणः । अरुणे मदस्य स्रुती मदधारे ययोस्तौ कपोलौ सम्मार्जन् प्रमृजन् । 'मृजेरजादौ

आघ्राय क्षणमतितृष्यतापि रोषा-
उत्तीरं निहितविवृत्तलोचनेन ।
संपृक्तं वनकरिणां मदाम्बुसेकै-
र्नाचेमे हिममपि वारि वारणेन ॥ ३४

प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहितताम्रदानरेखै-
रुत्तेरुस्सरसिजगन्धिभिः कपोलैः ॥ ३५

---

संक्रमे विभाषा वृद्धिर्वक्तव्ये'ति वृद्धिः । †मद इव सस्यन्दे सुस्राव । मदसंपृक्तस्य मदसावर्ण्यान्मदोपमा ॥ ३३

**आघ्रायेति ॥** अतितृष्यताप्यतिपिपासतापि क्षणमाघ्राय रोषादुत्तीरं परतीरे । विभक्त्यर्थेऽव्ययीभावः । निहिते विवृत्ते घूर्णिते लोचने येन तेन प्रतिगजदिदृक्षयेति भावः । वारणेन हिमं शीतलमपि वनकरिणां मदाम्बुसेकैः दानधाराभिः । सम्पृक्तं वारि नाचेमे न पीतमित्यर्थः । "'चमु अदन' इति धातोः कर्मणि लिट् ॥ ३४

**प्रश्च्योतदिति ॥** क्रीडन्तो विहरन्तः । गजपतयः निम्नगायाः गङ्गायाः पयांसि प्रश्च्योतद्भिः क्षरद्भिः मदैः सुरभीणि कृत्वा किञ्जल्कैः केसरैः व्यवहितास्तिरोहितास्ताम्रास्ताम्रवर्णा दानरेखा मदराजयो येषु तैः अत एव सरसिजगन्धिभिः कपोलैः उपलक्षितास्सन्तः उत्तेरुर्निर्जग्मुः । अत्र मदसरसिजगन्धयोस्समयोर्विनिमयोक्त्या समपरिवृत्तिरलङ्कारः । एतेन गजानां निम्नगायाश्च परिमळव्यत्ययान्तस्संरम्भो व्यज्यते ॥ ३५

---

† संक्रमः, गुणवृद्धिनिषेधहेतुः प्रत्ययः । कित् ङिच्चेति यावत् ॥

आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैस्सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
मांजिष्ठं वसनमिवाम्बु निर्बभाषे ॥ ३६

श्रीमद्भिर्नियमितकन्धरापरांतै-
स्संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निसृतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७

---

**आकीर्णमिति ॥** घनारुणेन सान्द्रलोहितेन । विशेषणसमासः बल-रजसा सेनापरागेण आकीर्णं सपदि प्रक्षोभैः आलोडनैः तटेषु तीरेषु तरंगितं सञ्जाततरङ्गं । तारकादित्वादितच् । यद्वा तरङ्गवत्कृतं । मत्वन्तात्तत्करोतीति णिचि कर्मणि क्तः । णाविष्ठवद्भावान्मतुपो लुक् । तथा मातङ्गैः उन्मथितानां लुलितानां सरोजानां रेणुभिः पिङ्गं पिशङ्गं अम्बु । मञ्जिष्ठया महारजनेन रक्तं माञ्जिष्ठं । तेन रक्तं रागादित्यण् । वसनमिव निर्बभासे । मांजिष्ठमित्यत्र कौशेयमिति वा पाठः । तत्र 'कोशाड्ढञि'ति सम्भूतार्थे कोशशब्दाड्ढञ् । नि । 'कौशेयं क्रिमिकोशोत्थ' मित्यमरः ॥ ३६

**श्रीमद्भिरिति ॥** श्रीमद्भिः शोभावद्भिः नियमिताः कन्धराः अपरान्ताः चरमपादाग्राणि च येषां तैः । नि । 'अपरः पश्चिमः पाद' इति वैजयन्ती । अगुरुवनेषु साङ्गहारं साङ्गविक्षेपं यथा तथा संसक्तैः । निसृतानि प्रचलितानि मदाम्बूनि येभ्यः तैः गजेन्द्रैः प्रस्यन्दिनः जलस्राविणः । प्रचलिता ये गण्ड-शैलाश्च्युतोपलास्तेषां शोभा सम्प्रापे प्राप्ता । कर्मणि लिट् । नि । 'गण्डशैलास्तु च्युताः स्थूलोपलागिरे' रित्यमरः । अत्रान्यशोभाप्राप्त्यसम्भवात्तत्सदृशी शोभेति प्रतिबिम्बाक्षेपान्निदर्शनालङ्कारः ॥ ३७

निश्शेषं प्रशमितरेणुवारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम् ।
आमोदं व्यवहितभूरिपुष्पगन्धं
भिन्नैलासुरभिमुवाह गन्धवाहः ॥ ३८

साद्दश्यं ददति गभीरमेघघोषै-
रुन्निद्रक्षुभितमृगाधिपश्रुतानि ।
आतेनुश्चकितचकोरनीलकण्ठा-
न्कच्छान्तानमरमहेभबृंहितानि ॥ ३९

---

**निश्शेषमिति ॥** गन्धं वहतीति गन्धवाहो वायुः । कर्मण्यण् । स्रोतोभिस्सप्तमदनाडीभिः । अजस्रं निश्शेषं यथा तथा प्रशमितः रेणुर्येन तत् मदजलमुज्झतां वर्षतां वारणानां सम्बन्धिनं । व्यवहितस्तिरस्कृतः भूरिः बहुलः पुष्पगन्धो येन तं भिन्नाः फुल्लाः एलालताविशेषाः । नि । 'पृथ्वीका चन्द्रबाले-ले'त्यमरः । तत्पुष्पाणि चैलाः । नि । 'पुष्पे जातिप्रभृतयः स्वलिङ्गा व्रीहयः फले' इत्यमरः ॥ भिन्नैलावत्सुरभिं घ्राणेन्द्रियतर्पणमित्युपमा । परिमळमामोदमुवाह वहति स्म ॥ ३८

**साद्दश्यमिति ॥** गम्भीरमेघघोषैः सान्द्रगर्जितैः साद्दश्यं दधतीत्युपमा । दधातेश्शतृप्रत्ययः । 'वा नपुंसकस्ये'ति विकल्पान्नुमभावः । उन्निद्राः बृंहितश्रवणादेव । प्रबुद्धाः क्षुभिताः संरब्धाश्च ये मृगाधिपाः तैः श्रुतानि आकर्णितानि न तु प्रतिबुद्धानीति भावः । अमरमहेभबृंहितानि महांतश्च ते इभा गजाश्चेति महेभाः अमराणां महेभाः तेषां बृंहितानि गर्जितानि कच्छान्तान् समीपप्रदेशान् । नि । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध' इत्यमरः । चकिताः गर्जितशङ्कया सम्भ्रान्ताः चकोराः पक्षिविशेषाः नीलकण्ठाः मयूराश्च येषु तान् तथाभूतान् आतेनुः । भ्रान्तिमदलङ्कारः ॥ ३९

शाखावसक्तकमनीयपरिच्छदाना-
मध्वश्रमाकुलवधूजनसेवितानाम् ।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ ४०

इति श्रीभारविकृतौ किरातार्जुनीये लक्ष्मोपदलाञ्छने महाकाव्ये
सप्तमस्सर्गः ॥

---

**शाखेति** ॥ परितः छाद्यते अनेनेति परिच्छदः परिकरः वसनाभरणादिः । 'पुंसि संज्ञायां घः प्रायेणे'ति घप्रत्ययः । 'छादेर्घेऽद्व्युपसर्गस्ये'ति ह्रस्वत्वं । शाखासु अवसक्ताः कमनीयाः परिच्छदाः येषां तेषां अध्वनि श्रमः तेन आकुलैः पीडितैः वधूजनैस्सेवितानां निवेशितानां विभागैः आवासभूमिविच्छेदैः परिष्कृतानामलंकृतानां । 'सम्परिभ्यामि'त्यादिना सुट् । वनपादपानां अरण्यवृक्षाणां पुरे यदुपवनं कृत्रिमवनं तत्र जाता पुरोपवनजा लक्ष्मीः जज्ञे जाता । अत्रान्यस्यान्यलक्ष्मीसम्बन्धासम्भवात्तत्सदृशीति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धनिबन्धनेयं निदर्शना । वसन्ततिलकावृत्तं । श्लो 'उक्ता वसन्ततिलका तभजाजगौग' इति लक्षणात् ॥ ४०.

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायां सप्तमस्सर्गः ॥

---

## ॥ अष्टमस्सर्गः ॥

अथ स्वमायाकृतमन्दिरोज्ज्वलं ज्वलन्मणिव्योमसदां सनातनम् ।
सुराङ्गनागोपतिचापगोपुरं पुरं वनानां विजिहीर्षया जहुः ॥ १

यथायथं तास्सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः क्षणद्युतीनां दधुरेकरूपताम् ॥

---

अव—इत्थं सेनानिवेशमुपवर्ण्य अधुना पुष्पापचयं वर्णयति—

**अथेति ॥** अथ निवेशनानन्तरं सुराङ्गनाः अप्सरसः स्वमायया स्वेच्छाविशेषेण कृतैः निर्मितैः मन्दिरैः उज्ज्वलं दीप्तं ज्वलन्तः मणयः यस्मिन् तत् व्योमसदां गन्धर्वाणां सनातनं सदातनं । 'सायं चिर'मित्यादिना भवार्थे ट्युल् तुडागमश्च । गौर्वज्रं स्वर्गो वा । तत्पतिरिन्द्रः तच्चापसवर्णानि गोपुराणि यस्य तत्तथोक्तमित्युपमा । पुरं नगरं वनानां विजिहीर्षया वनानि विहर्तुमिच्छया 'कर्मणि षष्ठी । जहुः तत्यजुः जहातेर्लिट् । अत्र ज्वलं ज्वलदिति पुरं पुरमिति चासकृद्व्यञ्जनद्वयावृत्त्या छेकानुप्रासः । अन्यत्र तद्वैपरीत्याद्वृत्त्यनुप्रास इति तयोरुपमायाश्च संसृष्टिः । अस्मिन् सर्गे वंशस्थं वृत्तम् । जतौ तु 'वंशस्थ-मुदीरितं जरा' विति लक्षणात् ॥ १

**यथायथमिति ॥** यथायथं यथास्वं स्वकीयमनतिक्रम्येत्यर्थः । नि । 'यथास्वेतु यथायथ' मित्यमरः । 'यथा स्वे यथायथं' इति नपुंसकत्वनिपातेन ह्रस्वत्वम् । नभश्चरैर्गन्धर्वैः सेवैश्च सहिताः प्रभाभिः स्वदोभिभिः उद्भासिताः शैलवीरुधो याभिस्ताः पूर्वोक्ताः वनजायतेक्षणाः पद्मविशाल लोचनाः स्त्रियः वनं विशन्त्यः क्षणं द्युतिर्यासां तासां क्षणद्युतीनां विद्युतां एकरूपतां समानरूपतां दधुः । मुहुर्द्रुमान्तराळे तासां स्फुरणस्य क्षणिकत्वादिति भावः । श्लेषानुप्राणितेय-मुपमा । श्लेष एवेति केचित् । उभयथाप्यनुप्रासेन संसर्गः ॥ २

निवृत्तवृत्तोरुपयोधरक्लमः प्रवृत्तनिर्ह्लादिविभूषणारवः ।
नितम्बिनीनां भृशमादधे धृतिं नभःप्रयाणादवनौ परिक्रमः ॥ ३

घनानि कामं कुसुमानि बिभ्रतः करप्रचेयान्यपहाय शाखिनः ।
पुरोऽभिसस्त्रे सुरसुन्दरीजनैर्यथोत्तरेच्छा हि गुणेषु कामिनः ॥ ४

तनूरलक्तारुणपाणिपल्लवाः स्फुरन्नखांशूत्करमञ्जरीभृतः ।
विलासिनीबाहुलता वनाळयो विलेपनामोदहृतास्सिषेविरे ॥ ५

---

**निवृत्तेति** ॥ निवृत्तः गतः वृत्तस्य वर्तुलस्य उरुपयोधरस्य क्लमो यस्मिन् सः । पादप्रक्षेपणेषु विश्रान्तिसम्भवादिति भावः । किञ्च । प्रवृत्तो जातो निर्ह्लादिविभूषणानां नूपुरादीनामारवो यस्मिन् सः । अवनौ पृथिव्यां परिक्रमः सञ्चारः नितम्बिनीनां स्त्रीणां नभःप्रयाणाद्भृशमधिकं 'पञ्चमी विभक्ते' इति पञ्चमी । धृतिं सन्तोषमादधे । अत्र विशिष्टपरिक्रमस्य धृत्याधानहेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ ३

**घनानीति** ॥ घनानि सान्द्राणि न तु विरळानि करप्रचेयानि हस्तग्राह्याणि न तूच्चानि । 'कृत्यैरधिकार्थवचने' इति तृतीया समासः । कामं कुसुमानि बिभ्रतः नवकुसुमितान् शाखिनः तरून् अपहाय सुरसुन्दरीजनैः पुरोऽग्रतः अभिसस्त्रे अभिसृतम् । भावे लिट् । तथाहि—कामिनः गुणेष्वतिशयेषु विषये उत्तरमुत्तरं यथोत्तरं वीप्सार्थेऽव्ययीभावः । यथोत्तरमिच्छा येषां ते यथोत्तरेच्छा उत्तरोत्तराभिलाषुका हि । अत्र परिकरोत्थापितोऽर्थान्तरन्यासोऽलङ्कारः ॥ ४

**तनूरिति** ॥ विलेपनानां आमोदेन हृता आकृष्टा वनाळयो नवभृङ्गाः । तनूः कृशाः अलक्तैररुणा पाणय एव पल्लवाः यासां ताः स्फुरन्तः नखांशूनामुत्कराः पुञ्जा एव मञ्जर्यः ताः बिभ्रतीति तथोक्ताः । क्विप् । विलासिनीनां बाहव एव लताः ताः सिषेविरे । अत्र समस्तवस्तुविषयसावयवरूपकमलङ्कारः । पाण्याद्यवयवेषु पल्लवादीनां बाहुषु लतानां च रूपणादिति ॥ ५

निपीयमानस्तबका शिलीमुखैरशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनैरमन्ददष्टोष्ठकरावधूननम् ॥ ६

करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम् ।
उपेयुषी कल्पलताभिशङ्कया कथन्नितस्त्रस्यति षट्पदावलिः ॥ ७

जहीहि कोपं दयितोऽनुगम्यतां पुरोऽनुशेते तव चञ्चलं मनः ।

---

**निपीयमानेति** ॥ शिलीमुखैः अलिभिः । नि । 'अलिबाणौ शिलीमुखा' वित्यमरः । निपीयमानः स्तबकः गुच्छो यस्यास्सा । चला बालपल्लवा यस्यास्सा । अत एव अमन्दं दृढं दष्टः ओष्ठो यस्मिन् तत् करावधूननं करकम्पनं विडम्बयन्ती अनुकुर्वती । स्तबकपानेनोष्ठदंशनं पल्लवचलनेन करावधूननं चानुकुर्वतीत्यर्थः । धूञो ण्यन्ता ल्यट् । णिचि धूञ् प्रीञोर्नुग्वक्तव्य इति नुगागमः । अशोकयष्टिः अशोकशाखेत्यर्थः । वधूजनैः ददृशे दृष्टा । अत्र विडम्बयन्तीति प्रस्तुताशोकशाखाविशेषणभूतोपमामहिम्ना अप्रस्तुतनायिकाप्रतीतेस्समासोक्तिरलङ्कारः । तदुत्थापितयैवोपमयाङ्गाङ्गिभावेन सङ्कीर्यते ॥ ६

अव—अथ काचिन्मधुपाक्रान्तां काञ्चिदाह—

**कराविति** ॥ मानपरिहारेण मधुपाश्रयणे तु न कश्चिद्बाध इत्याशयेन सम्बोधयति—हे मानिनीति । नवपल्लवस्य आकृतिरिव आकृतिर्ययोरित्युपमा तौ करौ धुनाना धुञः क्रैयादिकात्कर्तरि लटश्शानच् । वृथा व्यर्थं परिश्रमं मा कृथाः मा कुरुष्व । करोतेराशीरर्थे माङि लुङ् । वृथात्वे हेतुमाह । कल्पलताभिशङ्कया कल्पवल्लीभ्रमेणेति भ्रान्तिमदलङ्कारः । उपेयुषी उपगता षट्पदावलिः कथन्नु । इतः त्रस्यति बिभेति । न त्रस्यत्येवेत्यर्थः । 'वा भ्राशे'त्यादिना विकल्पात् श्यन् प्रत्ययः । अत्र कान्तापरिश्रमवैयर्थ्यरूपकार्यस्य षट्पदावळेः कल्पवल्लीभ्रमनिबन्धनत्रासाभावरूपकारणेन समर्थनात्कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । स च भ्रान्तिमताङ्गाङ्गिभावेन सङ्कीर्णस्सन्नुपमया संसृज्यते ॥ ७

अव—अथ काचित्सखी काञ्चित् प्रणयकुपितामाह—

**जहीहीति** ॥ प्रियमुपैतुं स्वयमेवानुसर्तुं इच्छतीम् । 'आच्छीनद्योर्नु'मिति विकल्पान्नुमभावः । काञ्चिन्नायिकां निपुणः चित्तज्ञः सखीजनः कोपं जहीहि

इति प्रियं काश्चिदुपेतुमिच्छतीं पुरानुनिन्ये निपुणस्सखीजनः ॥

समुन्नतैः काशदुकूलशालिभिः परिक्वणत्सारसपङ्क्तिमेखलैः ।
प्रतीरदेशैस्स्वकलत्रचारुभिर्विभूषिताः कुञ्जसमुद्रयोषितः ॥ ९

विदूरपातेन भिदामुपेयुषश्च्युताः प्रवाहादभितः प्रसारिणः ।
प्रियाङ्कशीता शुचिमौक्तिकत्विषो वनप्रहासा इव वारिबिन्दवः ॥

सखीजनं प्रेम गुरूकृतादरं निरीक्षमाणा इव नम्रमूर्तयः ।

---

त्यज । 'आचहा' विति विकल्पादीकारादेशः । दयितः अनुगम्यतामनुस्त्रियताम् । उभयत्रापि प्रार्थनायां लोट् । अन्यथा चञ्चलं अस्थिरं तव मनः । पुरोनुशेते अग्रेनुशयिष्यते । अनुतप्स्यत इत्यर्थः । यावत्पुरा निपातयोर्लट् । इति लट् । इत्यनेन प्रकारेण पुरा पूर्वमेव अनुनिन्ये प्रसादयामास ॥ ८

अथ चतुर्भिः कालापकमाह—

**समुन्नतैरिति ॥** समुन्नतैः काशानि अश्ववालकुसुमानि दुकूलानीव तैः शालन्त इति तथोक्तैः । सारसपङ्क्यो मेखला इव ताः परिक्वणन्त्यो येषु ते तैः । स्वेषां कळत्राणि श्रोण्य इव चारवस्तैः । नि । 'कलत्रं श्रोणिभार्ययो' रित्यमरः । प्रतीरदेशैः तटप्रदेशैः विभूषिताः कुञ्जसमुद्रयोषितः वननद्य इत्यर्थः । सुरराजयोषितां मनांसि जहुरिति सम्बन्धः । अत्र तीरादीनां कळत्राद्यौपम्याद्योषिच्छब्दसामर्थ्याच्च नदीनां योषिदौपम्यं गम्यते ॥ ९

**विदूरेति ॥** विदूरात्पातेन भिदां भेदम् ॥ 'षिद्भिदादिभ्योङ्' इत्यङ् प्रत्ययः । उपेयुषः उपगतात् प्रवाहाच्च्युताः अतएव अभितः प्रसारिणः प्रसर्पन्तः प्रियाणामङ्कः उत्सङ्ग इव शीताः शीतलाः शुचीनां मौक्तिकानां त्विष इव त्विषो येषां ते । किञ्च वनस्य प्रहासा इव स्थिता इत्युत्प्रेक्षा । वारिबिन्दवश्च अत्रोपमयोरुभयोरुत्प्रेक्षायाश्च संसृष्टिः ॥ १०

**सखीति ॥** द्वौ रेफौ वर्णविशेषौ यस्मिन् स द्विरेफः । भ्रमरशब्दस्तेन तदर्थो लक्ष्यते । द्व्यक्षरं मानमिति विदधातीति भाष्यकारः । स्थिराः निश्चलाः द्विरेफा एवाञ्जनानि तैः शारितानि शबलीकृतानि उदराणि येषां तैः । नि ।

स्थिरद्विरेफाञ्जनशारितोदरैर्विसारिभिः पुष्पविलोचनैर्लताः ॥ ११

उपेयुषीणां बृहतीरधित्यका मनांसि जह्रुस्सुरराजयोषिताम् ।
कपोलकाषैः करिणां मदारुणैरुपाहितश्यामरुचश्च चन्दनाः ॥ १२

स्वगोचरे सत्यपि चित्तहारिणा
विलोभ्यमानाः प्रसवेन शाखिनाम् ।
नभश्चराणामुपकर्तुमिच्छतां
प्रियाणि चक्रुः प्रणयेन योषितः ॥ १३

---

'शारश्शबलवातयो'रिति विश्वः । विसारिभिः विस्तृतैः । पुष्पाण्येव विलोचनानि तैः प्रेम्णा गुरूकृतः आदरो यस्मिन् कर्मणि तत्तथा कान्ताजनं सखीजनं निरीक्षमाणाः पश्यन्त्य इव स्थिता इत्युत्प्रेक्षा । कुतः? नम्रमूर्तयः अवनतांग्यः लताश्च । अत्र रूपकोत्प्रेक्षयोस्सङ्करः ॥ ११

**उपेयुषीणामिति** ॥ मदेन अरुणैः अव्यक्तरागैः । नि । 'अव्यक्तरागस्त्वरुण' इत्यमरः । करिणां कपोलानां काषैः कषणैः उपाहितश्यामरुचः जनितकृष्णवर्णा इति तद्गुणालङ्कारः । चन्दनाः मलयजाश्च । नि । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रिया'मित्यमरः । बृहतीः अधित्यकाः ऊर्ध्वभूमीः उपेयुषीणां सुरराजयोषितां मनांसि जह्रुः । अत्र चतुश्श्लोक्यां नद्यादीनां विशिष्टानामेवाप्सरोमनोहरणहेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः ॥ १२

**स्वगोचरमिति** ॥ चित्तहारिणा मनोहरेण । शाखिनां प्रसवेन पुष्पोजातेन । विलोभ्यमानाः आकृष्यमाणाः । तत्र स्पृहयालव इत्यर्थः । योषितः अप्सरसः । स्वगोचरे स्वविषये सत्यपि आत्महस्तेनैव ग्रहीतुं शक्येऽपीत्यर्थः - प्रसव इति शेषः । उपकर्तुं परिचरितुं इच्छतां प्रसूनादिदानेन प्रियं चिकीर्षतां नभश्चराणां गन्धर्वाणां प्रणयेन हेतुना प्रियाणि अभिलषितानि । मह्यमिदमपचित्य प्रयच्छेत्येवमादीनि चक्रुः । स्वकरग्राह्यमपि प्रसवं स्वकान्तप्रियार्थं तद्दीयमानमेवाग्रहीषुरित्यर्थः ॥ १३

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिश्शिथिलाकुलोच्चया ।
समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम् ॥ १५

सलीलमासक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम् ।

---

**प्रयच्छतेति ॥** कुसुमानि प्रयच्छत । दाणो यच्छादेशः । दयितेन उच्चैः विपक्षगोत्रं सपत्नीनामधेयं लम्भिता प्रापिता तन्नाम्ना आहूतेत्यर्थः । नि । 'नाम गोत्रं कुलं गोत्र'मिति शाश्वतः । अतएव मानिनी न किञ्चिदूचे । कर्तरि लिट् । किन्तु केवलं बाष्पाकुललोचना सती चरणेन भुवं लिलेख । गोत्रस्खलनजनितेर्ष्यानिमित्तनिर्वेदादिति भावः । तदुक्तं दशरूपके—श्लो 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदस्स्वावमानना । तत्र चिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वासदीनता' इति ॥ १४

**प्रिय इति ॥** वाचं यच्छति ददति समालपति सतीत्यर्थः । दाणश्शतृप्रत्ययः । 'पा घ्रे'त्यादिना यच्छादेशः । प्रिये निबद्धदृष्टिः अतएव उन्मुखी शिथिलः श्लथः आकुलश्चलश्च उच्चयो नीवीबन्धो यस्यास्सा । नि । 'नारीकट्यंशुकग्रन्थौ नीविस्स्यादुच्चयोप्यर्थे'ति मार्तण्डः । अपरा अन्या स्त्री अंशुकं न समादधे न बबन्ध । रागपारवश्यादिति भावः । पुष्पेषु वृथा मोघं अहितमारोपितं अस्थाने प्रसारितमित्यर्थः । पाणिपल्लवं च न विवेद । प्रियासक्तचित्ततयेति भावः । एषा च प्रगल्भा नायिका पाणिपल्लवमित्यत्र अन्यतरसाधकबाधकप्रमाणाभावादुपमारूपकयोस्सन्देहसङ्करः ॥ १५

**सलीलमिति ॥** आसक्ताः लग्ना लतान्ताः पल्लवा एव भूषणं यस्मिन् तत् पल्लवैस्सह ग्रथितमित्यर्थः । कुसुमावतंसकं पुष्पशेखरं कान्तदत्तमिति भावः । सलीलं समासजन्त्या शिरसि प्रतिदधत्या 'दंश सञ्जस्वंजांशपी'ति नलोपः ।

स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया ॥

कळत्रभारेण विलोलनीविना गळद्दुकूलस्तनशालिनोरसा ।

वळिव्यपायस्फुटरोमराजिना निरायतत्वादुदरेण ताम्यता ॥ १७

विलम्बमानाकुलकेशपाशया कयाचिदाविष्कृतबाहुमूलया ।

तरुप्रसूनानपदिश्य सादरं मनोधिनाथस्य मनस्समाददे ॥ १८

व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।

---

कान्तया कश्चित् स्तनाभ्यामुपपीड्य स्तनोपपीडं 'सप्तम्यां चे'त्यादिना णमुल्प्रत्ययः । नितम्बिना प्रशस्तनितम्बवता प्रशंसायामिनिः । घनेन निबिडेन जघनेन । नि । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर' इत्यमरः । नुनुदे नुन्नः । औत्सुक्यातिरेकादिति भावः । एषा च प्रगल्भैव नायिका ॥ १६

अथ युग्मेनाह—

**कळत्रेति ॥** विलोलनीविना गालोन्नमनाद्विश्लिष्टवस्त्रग्रन्थिना । कळत्रभारेण श्रोणिभारेण । नि । 'कळत्रं श्रोणिभार्ययो' रित्यमरः । तथा गळत् स्रंसमानं दुकूलं याभ्यां ताभ्यां स्तनाभ्यां शालत इति तथोक्तेन उरसा तथा वळिव्यापायेन भङ्गिनिवृत्त्या स्फुटा रोमराजिर्यस्मिन् तेन निरायतत्त्वा-त्प्रसारितत्वात्ताम्यता तनूभवता उदरेण च उपलक्षितया । स्वभावोक्तिरलङ्कारः ॥

**विलम्बमानेति ॥** विलम्बमानः विस्रंसमानः आकुलः विलुलितश्च केशपाशो यस्यास्तया आविष्कृतबाहुमूलया दर्शितकक्षप्रदेशया कयाचित्कान्तया तरुप्रसूनानि अपदिश्य । प्रसूनग्रहणं व्याजीकृत्येत्यर्थः । नि । 'व्याजोपदेशो लक्ष्यं चे'त्यमरः । सादरं साभिलाषं मनोधिनाथस्य प्रियस्य मनः समाददे आचकृषे । कर्मणि लुट् । सर्वांगसौष्ठवदर्शनात्सद्यो लग्नं प्रियमनस्तत्रेति भावः । अत्र प्रियमनोहरणहेतुभिः कान्ताविशेषणपदार्थैः काव्यलिङ्गमुत्तिष्ठमानं स्वभा-वोक्त्या सहांगांगिभावेन सङ्कीर्यते ॥ १८

**व्यपोहितुमिति ॥** उन्नतौ पीवरौ च स्तनौ यस्यास्सा उन्नतपीवरस्तनी । 'स्वाङ्गाच्चे'त्यादिना ङीप् । काचिल्लोचनतः स्वनेत्रात् पुष्पजं रजः परागं मुखानिलैः फूत्कारमारुतैः व्यपोहितुमपनेतुं अपारयन्तं किल अशक्नुवन्तमिव ।

पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥

इमान्यमूनीत्यपवर्जिते शनैर्यथाभिरामं कुसुमाग्रपल्लवे ।
विहाय निस्सारतयेव भूरुहान् पदं वनश्रीर्वनितासु सन्दधे ॥२०

प्रवाळभङ्गारुणपाणिपल्लवः परागपाण्डूकृतपीवरस्तनः ।
महीरुहः पुष्पसुगन्धिराददे वपुर्गुणोच्छ्रायमिवाङ्गनाजनः ॥ २१

वरोरुभिर्वारणहस्तपीवरैश्चिराय खिन्ना नवपल्लवश्रियः ।

---

किलेत्यळीके वस्तुतस्तु तदास्यस्पर्शलोभादपारयन्तमित्यर्थः । प्रियमुन्मनाः उत्सुका सती अतएव पयोधरेण उरसि जघान । तत्कपटपरिज्ञानजन्यादौत्सुक्यादिति भावः । हननस्य स्थानत्वादुरसीति सप्तमी । इयं च प्रगल्भैव ॥ १९

**इमानीति ॥** यद्यदभिरामं यथाभिरामं वीप्सायामव्ययीभावः । कुसुमान्यग्रपल्लवानि च कुसुमाग्रपल्लवं तस्मिन् । 'जातिरप्राणिना' मित्येकवद्भावान्नपुंसकत्वं । इमान्यमूनि इतीत्थं निर्देशपूर्वकमित्यर्थः । इदमदसी सन्निकृष्टविप्रकृष्टार्थे । शनैरपवर्जिते अपचिते सति वनश्रीः निस्सारतयेवेति हेतूत्प्रेक्षा । भूरुहान् तरून् विहाय वनितासु पदं सन्दधे । अत्र वनितागतायाः पुष्पप्रसाधनजनितायाः लक्ष्म्याः विषयभूतायाः निगरणेन विषयभूतायाः वनश्रियः वनितागतत्वोक्त्या असम्बन्धे सम्बन्धरूपा भेदे अभेदरूपा वा अतिशयोक्तिरलङ्कारः । श्लो । 'विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिस्स्यात्कविप्रौढोक्तिजीविते'ति लक्षणात् । उत्प्रेक्षा त्वङ्गमस्याः ॥ २०

**प्रवाळेति ॥** प्रवाळभङ्गेन पल्लवलवनेन अरुणपाणिपल्लवः । तद्रसरञ्जनादित्यर्थः । परागेण पुष्परजसा पाण्डूकृतौ पीवरस्तनौ यस्य सः पुष्पैस्सुगन्धिः सुरभिः अङ्गनाजनः महीरुहः वृक्षजातात् वपुर्गुणस्य स्वदेहगुणस्य उच्छ्रायः पाणिपल्लवादेर्य उत्कर्षस्तं आददे लब्धवानिवेत्युत्प्रेक्षा । वस्तुतस्तु स्वाभाविक एव प्रवाळभङ्गादिभिरभिव्यज्यत इति भावः । उत्कृष्टः श्रायः उच्छ्राय इति घञन्तेन प्रादिसमासः । स तूपसृष्टाद्धञ्प्रत्ययः । श्रिणीभुवोऽनुपसर्ग इति प्रतिषेधात् ॥ २१

अथ—पञ्चभिः श्लोकैः कुळकमाह—

**वरोरुभिरिति ॥** अनुसानु सानुषु यद्वर्त्म ततस्सकाशात् गुरुणा खेदेन मन्थरमलसं विनिर्यतीनां निर्गच्छन्तीनां सुराङ्गनानां सम्बन्धिभिः वारण-

समेऽपि यातुं चरणाननीश्वरान्मदादिव प्रस्खलतः पदेपदे ॥ २२

विसारिकाञ्चीमणिरश्मिलब्धया मनोहरोच्छ्रायनितम्बशोभया ।
स्थितानि जित्वा नवसैकतद्युतिं श्रमातिरिक्तैर्जघनानि गौरवैः ॥

समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु स्तनातिभारादुदराणि नम्रताम् ॥

समानकान्तीनि तुषारभूषितैस्सरोरुहैरस्फुटपत्रपङ्क्तिभिः ।

---

हस्तपीवरैः करिकरस्थूलैः वराश्च ते ऊरवश्च तैश्चिराय खिन्नान् किञ्च नवपल्लवानां श्रीरिव श्रीर्येषां तान् तद्वन्मृदूनित्यर्थः । अतएव समे समस्थलेऽपि किंपुनर्विषम इति भावः । यातुं गन्तुं अनीश्वरान् अशक्तान् अत एव मदादिव पदेपदे वीप्सायां द्विर्भावः । प्रस्खलतश्चरणान् । मदादिवेत्युपमा ॥ २२

**विसारीति ॥** विसारिभिः । काञ्चीमणिरश्मिभिः लब्धया तज्जनितयेत्यर्थः । मनोहरः उच्छ्रायः उत्सेधो येषां तेषां नितम्बानां शोभया करणेन । नवसैकतानां द्युतिं शोभां जित्वा स्थितानि तत्तुल्यानीत्यर्थः । अतएवोपमालङ्कारः । श्रमेण अतिरिक्तैः अतिशयितैः गौरवैः गुरुत्वगुणैरुपलक्षितानि । भृशं भारायमाणानीत्यर्थः । जघनानि च । उच्छ्रायो व्याख्यातः ॥ २३

**समुच्छ्वसदिति ॥** समुच्छ्वसत्पङ्कजकोशकोमलैः दलत्कमलमुकुलमुग्धैरित्युपमा । नाभिभिः प्रतारिकाख्यैरुदरजैरङ्गैः । नि । 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका । रथचक्रस्य मध्यस्थपिण्डिकायां च नूपुर ' इति केशवः । पुल्लिङ्गतायां तु कविरेव प्रमाणं † उपनीवि नीव्यास्समीपे उपाहितश्रीणि जनितकान्तीनि तथा वलीविभङ्गिषु ऊर्मिमत्सु मध्येष्ववलग्नेषु स्तनातिभारान्नम्रतां दधन्ति बिभ्राणानि । 'वा नपुंसकस्ये 'ति विकल्पाच्चतुर्नुमागमः । उदराणि च ॥

**समानेति ॥** किञ्च । घर्माम्बुकणैः स्वेदोदकबिन्दुभिः समन्ततः चितानि व्याप्तानि अनुत्फुल्लविलोचनानि अविकसदक्षीणि अतएव । तुषारभूषितैः

---

† 'मुख्यराट् क्षत्रयोर्नाभिः पुंसि प्राण्यङ्गके द्वयो 'रिति त्रिकाण्डशेषवचनात् । ' मुख्यराट् क्षत्रयोः पुंसि नाभिः प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे 'इति रभसकोशाच्च नाभिशब्दस्य पुल्लिङ्गत्वं प्रामाणिकमेवेति बोध्यम् ॥

चितानि घर्माम्बुकणैस्समन्ततो मुखान्यनुत्फुल्लविलोचनानि च ॥

विनिर्यतीनां गुरुखेदमन्थरं सुराङ्गनानामनुसानु वर्त्मनः ।
सविस्मयं रूपयतो नभश्चरान्विवेश तत्पूर्वमिवेक्षणादरः ॥ २६

अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः ।
पयोऽवगाढुं कलहंसनादिनी समाजुहावेव वधूस्सुरापगा ॥ २७

प्रशान्तघर्माभिभवश्शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः ।

---

शीकरपरिष्कृतैः । नि । 'तुषारौ हिमशीकरा' वित्यमरः । अस्फुटपत्रपङ्क्तिभिः अविकचदळावलिभिः । नि । 'व्याकोचविकचस्फुटा' इत्यमरः । सरोरुहैः समानकान्तीनीत्युपमा मुखानि च ॥ २५

**विनिर्यतीनामिति ॥** सविस्मयं रूपयतः पूर्वोक्तचरणादीनि निर्वर्णयतः । नभश्चरान् गन्धर्वान् तत्पूर्वमिव तदेव प्रथमं यथा तथेवेत्युत्प्रेक्षा । ईक्षणादरः आलोकनकौतुकं विवेश । पूर्वार्धं वरोरुभिरिति श्लोके व्याख्यातम् । अत्र कुलके स्वभावोक्तिरुत्प्रेक्षाङ्गम् ॥ २६

अथ — इत्थं पुष्पापचयमुपवर्ण्य जलक्रीडावर्णनमारभते—

**अथेति ॥** अथ पुष्पापचयानन्तरं स्फुरद्भिः चलद्भिर्मीनैः विधूतपङ्कजेति सदृष्टिसुखवीक्षणोक्तिः । विपङ्कं पङ्करहितं विहारयोग्यमिति यावत् । तत्र तीरे स्खलिता विचलिता ऊर्मीणां संहतिर्यस्यां सेति हस्तसंज्ञोक्तिः । कलहंसनादिनी कादम्बशब्दवतीति वाग्व्यापारोक्तिः । अतएव सुरापगा गङ्गा वधूरप्सरसः पयोऽवगाढुं अवगाहितुम् । गाहेरूदित्वादिड्विकल्पः । समाजुहावेव आकारयामासेवेत्युत्प्रेक्षा । नि । 'हूतिराकारणाह्वाने' इत्यमरः । 'हूयतेर्लिट्' । 'अभ्यस्तस्य' चेति सम्प्रसारणम् । अत्र मीनपङ्कजादिवर्णनं सुरापगायाः नैसर्गिकमिति केचित् । तस्मान्मनोहरमुपमाव्यक्तिकमलङ्कारः । तदुक्तम्—'उपमानस्य या व्यक्तिरुपमाव्यक्तिमात्रतः । प्रकाशमेति तत्राहुरुपमाव्यक्तिकं बुधा' इति * २७

**प्रशान्तेति ॥** प्रशान्तघर्माभिभवः प्रशान्तोष्णबाधः । 'वादान्तशान्ते' त्यादिना निपातनात्साधुः । शनैर्विवान् मन्दं वहन् । विपूर्वात् वातेश्शतृ-

---

* कुण्डलितो ग्रन्थः मुम्बापुस्तके नास्ति ॥

ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ २८

गतैस्सहावैः कलहंसविक्रमं कळत्रभारैः पुलिनं नितम्बिभिः ।
मुखैस्सरोजानि च दीर्घलोचनैस्सुरस्त्रियस्साम्यगुणान्निरासिरे ॥

विभिन्नपर्यन्तगमीनपङ्क्तयः पुरोवगाढास्सखिभिर्मरुत्वतः ।
कथञ्चिदापस्सुरसुन्दरीजनैस्सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ३०

विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः ।
विभिद्यमाना विससार सारसानुदस्य तीरेषु तरङ्गसंहतिः ॥ ३१

---

प्रत्ययः । परिमृष्टपङ्कजः पद्मगन्धीत्यर्थः । आत्तशीकरः । कुतः ? तरङ्गमालानां अन्तरं मध्यं गोचरः स्थानं यस्य सः अनिलः विलासिनीभ्यः भुजालम्बं ददाविवेत्युत्प्रेक्षा । विशिष्टवायुसम्पर्कात्तथोच्छ्वसुरित्यर्थः ॥ २८

**गतैरिति** ॥ सुरस्त्रियोऽप्सरसः सहावैः सविलासैः गतैः गतिभिः । 'नपुंसके भावे क्तः ।' कलहंसानां विक्रमं गतिं विलासविधुरमिति शेषः । तथा नितम्बिभिः प्रशस्तनितम्बैः कळत्रभारैः जघनभारैः पुलिनं नितम्बभारशून्यमिति शेषः । तथा दीर्घलोचनैः मुखैः सरोजानि च । आलोचनानीति शेषः । साम्यमेव गुणस्तस्मात् निरासिरे निरस्तवत्यः । गुणवदगुणयोः कुतस्साम्यमिति भावः । अस्यतेः कर्तरि लिट् । उपसर्गादस्यत्यूह्योर्वेति विकल्पादात्मनेपदम् ॥ २९

**विभिन्नेति** ॥ विभिन्नाः विच्युताः पर्यन्तगाः प्रान्तगाः मीनानां पङ्क्तयो यासां ताः । कुतः ? मरुत्वतः इन्द्रस्य सखिभिः सचिवैः गन्धर्वैः पुरः पूर्वमवगाढाः प्रविष्टाः । तासां विश्वासार्थं गर्तग्राहादिपरीक्षार्थं चेति भावः । सभीतिभिः अप्रविष्टविषयत्वात्सभयैः विषादिभिरिति पाठेऽप्ययमेवार्थो लक्ष्यः । सुरसुन्दरीजनैः तदेवावगाहनं प्रथमं यथा तथा अतएव कथञ्चित् भयात्कृच्छ्रेण आपः प्रपेदिरे अवजगाहिरे ॥ ३०

**विगाढेति** ॥ प्रयत्नेन संवाहिताः सञ्चारिताः पीवराः स्थूलाः ऊरवो याभिस्ताभिः रमणीभिः विगाढ एव विगाढमात्रे प्रविष्टएव सतीत्यर्थः । सुप्सुपेति समासः । नि । 'मात्रं कार्त्स्न्येऽवधारण' इत्यमरः । विभिद्यमाना स्वयं विकीर्यमाणा कर्मकर्तरि शानच् । तरङ्गसंहतिः तीरेषु सारसान् पक्षिविशेषान् । नि।

शिलाघनैर्नाकसदामुरस्स्थलैर्बृहन्निवेशैश्च वधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ ३२

विधूतकेशाः परिलोलितस्रजस्सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद्विहितागसो मुहुः प्रकम्पमीयुस्सभया इवोर्मयः ॥ ३३

विपक्षचित्तोन्मथना नखव्रणा-
स्तिरोहिता विभ्रममण्डनेन ये ।

---

'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वय' इति यादवः । यद्वा सारसान् हंसान् । नि । 'चक्राङ्गः सारसो हंस' इति शब्दार्णवे । उदस्य उत्सार्य विससार वितस्तार ॥ ३१

**शिलेति** ॥ शिलावद्घनैः कठिनैः । नाकसदां गन्धर्वाणां उरस्स्थलैः । बृहन्निवेशैः महासंस्थानैः अतिस्थूलैरित्यर्थः । वधूपयोधरैश्च तटमभितः नीतेन प्रापितेन अतएव विभिन्नवीचिना भग्नोर्मिणा अम्भसा कर्त्रा रुषेवेति हेतूत्प्रेक्षा । कलुषत्वमाविलत्वं मनः क्षोभश्च ध्वन्यते । भेजे कर्मणि लिट् । यथा कश्चिन्मृदुस्वभावः केनचित् कठिनात्मना साङ्गभङ्गं ताडयित्वा निष्कासितः क्षुभ्यति तद्वदिति भावः । कलुषत्वमित्यत्र वाच्यप्रतीयमानयोरभेदाध्यवसायः । अन्यथा शुद्धवाच्यस्याविलत्वस्य रोषाहेतुकत्वादुत्प्रेक्षानुत्थानादिति ॥ ३२

**विधूतेति** ॥ विधूताः विक्षिप्ताः केशाः यैस्ते विधूतकेशाः परिलोलिताः मृदिताः स्रजो यैस्ते । प्रविलुप्तं प्रमृष्टं चन्दनमङ्गरागो यैस्ते । ऊर्मयः तरङ्गाः इत्थमतिप्रसङ्गादतिसाङ्गत्यात् परस्त्रीसंसर्गरूपादत्याचाराद्वा । सुराङ्गनानां विहितागसः कृतमण्डनखण्डनरूपापराधाः अतएव सभया इव स्त्रीभ्यो भीता इव मुहुः प्रकम्पमीयुः । स्वाभाविकस्य प्रकम्पस्य भयहेतुकत्वमुत्प्रेक्ष्यते । यद्वा सुराङ्गनानां विधूतकेशा इत्यादियोजना । सापेक्षत्वेऽपि गमकत्वात्समासः । स्त्रीसङ्ग्रहणसाहसमपराधः । भयं तु राजादिभ्य इति ॥ ३३

**विपक्षेति** ॥ विपक्षस्य सपत्नीजनस्य चित्तानां उन्मथनाः व्यथका इत्यर्थः । बहुळग्रहणात्कर्तरि ल्युट् । ये नखव्रणाः नखक्षतानि । नि । 'व्रणोस्त्रिया'-

हृतस्य शेषानिव कुङ्कुमस्य तान्
विकत्थनीयान् दधुरन्यथा स्त्रियः ॥ ३४

सरोजपत्रे नु विलीनषट्पदे विलोलदृष्टेस्स्विदमू विलोचने ।
शिरोरुहास्स्विन्नतपक्ष्मसन्ततेर्द्विरेफवृन्दं नु विशब्दनिश्चलम् ॥
अगूढहास्यस्फुटदन्तकेसरं मुखं स्विदेतद्विकसन्नु पङ्कजम् ।
इति प्रलीनां नलिनीवने सखीं विदाम्बभूवुस्सुचिरेण योषितः ॥

प्रियेण सङ्ग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ।

---

मित्यमरः । विभ्रमस्सौन्दर्यमित्युक्तं तस्य मण्डनं । तादर्थ्येऽप्यश्वघासादिवत्षष्ठी-समासः । न तु चतुर्थीसमासः । यूपदार्वादिवत्प्रकृतिभावाभावादिति । तेन कुङ्कुमलेपनादिना तिरोहिताः छन्नाः । हृतस्य क्षालितस्य कुङ्कुमस्य शेषानिवावशिष्टलेशानिव स्थितानित्युत्प्रेक्षा विकत्थनीयान् भर्तृवाल्लभ्यस्य व्यञ्जकत्वेन श्लाघनीयान् नखव्रणान् स्त्रियः अन्यथा दधुः प्रकाशं दधुरित्यर्थः ॥ ३४

अथ युग्मेनाह—**सरोजेत्यादिना** ॥ अमू पुरोवर्तिनी विलीनषट्पदे संसक्तभृङ्गे । सकनीनिकत्वमक्ष्णोरर्थसिद्धमित्युपमानं विशिष्यते सरोजपत्रे नु यद्वा विलोलदृष्टेः चञ्चलाक्ष्याः विलोचने स्वित् नुस्विच्छब्दौ वितर्के । नतपक्ष्मसन्ततेः पक्ष्मलाक्ष्याः शिरोरुहाः स्वित् - विशब्दं निश्शब्दं नीरवं च तन्निश्चलञ्च द्विरेफवृन्दं नु ॥ ३५

**अगूढेति** ॥ किञ्च । अगूढहास्यं व्यक्तस्मितं तेन स्फुटाः केसरा इव दन्ताः दन्तकेसरा यस्य तत् मुखं स्वित् - यद्वा विकसत्पङ्कजं नु । इतीत्थं संशय्येति शेषः । नलिनीवने प्रलीनां निगूढां सखीं योषितः सुचिरेण बहुकालेन विदाम्बभूवुः विदुः निश्चिक्युरित्यर्थः । 'उपविदजागृभ्योऽन्यतरस्या'मिति विकल्पादाम्प्रत्ययः । अत्र युग्मे निश्चयान्तस्सन्देहालङ्कारः ॥ ३६

**प्रियेणेति** ॥ काचित्प्रियेण सङ्ग्रथ्य स्वयमेव रचयित्वा विपक्षसन्निधौ सपत्नीजनसमक्षं पीवरस्तने वक्षसि उपाहितां स्रजं मालां जलाविलां मृदिताम्-

स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ३७

असंशयं न्यस्तमुपान्तरक्ततां यदेव रोद्धुं रमणीभिरञ्जनम् ।
हृतेऽपि तस्मिन्सलिलेन शुक्लतां निरासरागो नयनेषु न श्रियम् ॥

द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः ।

---

पीत्यर्थः । न विजहौ न तत्याज । न च निर्गुणायां तत्र का प्रीतिरिति वाच्यमित्यर्थान्तरन्यासेनाह—तथाहि—गुणाः प्रेम्णि वसन्ति । वस्तुनि न वसन्ति । यत्प्रेमास्पदं तदेव गुणवत् अन्यत्तु गुणवदपि निर्गुणमेव । प्रेम न वस्तुपरीक्षामपेक्षत इति भावः ॥ ३७

**असंशयमिति ॥** स्त्रीणां नेत्रशोभार्थं अञ्जनधारणमम्बुविहारात्तदपगमे सति रक्तवर्णत्वं चाक्ष्णां ततश्शौक्ल्यतिरोधानं चेति स्थिते उत्प्रेक्षते । रमणीभिः सुराङ्गनाभिः यदञ्जनं न्यस्तं तदिति शेषः । यत्तदोर्नित्यसम्बन्धात् । तदञ्जनं उपान्तयोर्या रक्तता तां रोद्धुं प्रतिबद्धुं निरसितुमेव न्यस्तं । न तु शोभार्थमित्यर्थः । अन्यथा रागाभिव्याप्त्या शौक्ल्यतिरोधानं न स्यादित्यर्थः । असंशयमित्युत्प्रेक्षाव्यञ्जकं । संशयस्याभावः असंशयं नात्र संशयोऽस्तीत्यर्थः । अर्थाभावेऽव्ययीभावः । कुतएतदिति चेत्, यतस्तस्मिन्नञ्जने सलिलेन हृते क्षालिते सत्यपि रागः पूर्वोक्तोपान्तरक्तता प्रतिबन्धाभावादभितः प्रसृतेत्याशयः । नयनेषु शुक्लतां निरास निरस्तवान् अस्यतेर्लिट् । श्रियं शोभां तु न निरास । अतः शौक्ल्यविरोधिरागनिरोधार्थमेवायमञ्जनन्यासो न तु शोभार्थः । तस्यास्तदभावेऽपि सद्भावादित्यर्थः । अञ्जनापगमेऽपि तन्नयनानां राग एवालङ्कारोऽभूदिति भावः । अत्राञ्जनन्यासमनूद्य तस्य शोभार्थत्वनिषेधेन रागनिरोधार्थत्वोत्प्रेक्षणमुचितं उत्तरार्धे तस्यैव समर्थनात् एवं च रोद्धुं यदञ्जनं न्यस्तमित्येवान्वये विध्यनुवादविरोधस्स्यात् फलोत्प्रेक्षेयं ॥ ३८

**द्युतिमिति ॥** द्युतिं शोभां तेजश्च वहन्तः वेगिभिः जविभिः हृद्वेगिभिश्च जलैस्तोयैः अज्ञैश्च । लडयोरभेदात् । नि । 'जलं गोकबले नीरे ह्रीबेरेथ जडेन्यव' दिति विश्वः । प्रलोभात् गार्ध्यादिवेत्युत्प्रेक्षा । हृताः गृहीताः स्थानात्

उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकारास्सचिवा इवाययुः ॥
विपत्रलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीश्श्रियम् ।
निरीक्ष्य रामा बुबुधे नभश्चरैरलङ्कृतं तद्वपुषैव मण्डनम् ॥ ४०
तथा न पूर्वं कृतभूषणादरः प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टिः प्रतिपक्षयोषिताम् ॥
शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु ।

---

भ्रंशिताः उपप्लुताः म्रदिताः यद्वा कर्तरि क्तः प्लवमाना इत्यर्थः । अन्यत्र धन-ग्रहणबन्धनादिना पीडिताः । वनितावतंसकाः कर्णपूराः च्युताधिकाराः भ्रष्टाधि-कारास्सचिवा इव तत्क्षणं शोचनीयतां आययुः प्रापुः ॥ ३९

**विपत्रेति** ॥ विगताः पत्ररेखाः तिलकविशेषाः यासां ताः विपत्रलेखाः निरलक्तकाः क्षालितलाक्षारागाः अधराः यासां ताः निरञ्जनानि अक्षीणि यासां ताः 'बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात् षच्'। 'षिद्गौरादिभ्यश्चे'ति ङीष् । तथापि श्रियं बिभ्रतीः शोभाकारणाभावेऽपि शोभमाना इति विभावनालङ्कारः । रामाः निरीक्ष्य नभश्चरैः गन्धर्वैः तासां वपुषैव मण्डनमलङ्कृतं न तु मण्डनेन तद्वपु-रित्येवकारार्थः । इति बुबुधे ज्ञातम् । कर्मणि लिट् । स्वभाव रमणीयानां किमलं-करणैरिति भावः ॥ ४०

**तथेति** ॥ विलासिनीजनः पूर्वं जलविहारात्प्राक् कृतो भूषणेष्वादरो येन सः अनुरक्तप्रियत्वात्सम्यक्प्रसाधितस्सन्नपीत्यर्थः । प्रियस्यानुरागेण प्रेम्णा प्रतिपक्षयोषितां सपत्नीनां दृष्टीश्चक्षूंषि तथा न ददाह न दुःखीचकार । यथा जलेन आर्द्रः प्रक्षालितस्सन्नपीत्यर्थः । नखशब्देन नखक्षतानि लक्ष्यन्ते । तान्येव मण्डनं तस्य श्रिया तत्कृतशोभयेत्यर्थः । प्रियानुरागरतिविशेषयोः व्यञ्जकयेत्यर्थः । विपक्ष-योषितां सपत्नीनां दृष्टीः यथा ददाह तापयामास मण्डनान्तपरादपि नखमण्डन-मनुरागादपि तदनुभावः सपत्नीनां दुःखहेतुरिति भावः । जलार्द्रो ददाहेति विरुद्धकार्योत्पत्तिरूपो विषमालङ्कारः । श्लो । 'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् । विरूपघटना वा स्याद्विषमालंकृतिस्त्रिधे'ति लक्षणात् ॥ ४१

**शुभेति** ॥ शुभाननाः कोमलवदनाः विलोलहाराः चलमौक्तिकहाराः नितान्तगौर्यः अरुणांग्यः । नि । 'गौरोऽरुणे सिते पीत' इति वैजयन्ती ।

नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ताः परभागमूर्मिषु ॥४२

ह्रदाम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहुस्स्तनैस्तालसमं समाददे मनोहरं नृत्तमिव प्रवेपितम् ॥ ४३

श्रिया हसद्भिः कमलानि सस्मितैरलङ्कृताम्बुः प्रतिमागतैर्मुखैः ।
कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥४४

---

गौरादित्वात् ङीष् । भीरवः ताः स्त्रियः । नि । 'विशेषास्त्वङ्गना भीरु' रित्यमरः। साम्बुरुहेषु सकमलेषु चलाः फेनपङ्क्त्यो डिण्डीरराजयो येषु तेषु हृतानि क्षालितानि कुङ्कुमानि यैस्तेषु कुङ्कुमसंक्रमारुणेष्वित्यर्थः । ऊर्मिषु विषयेषु अलमत्यर्थं परभागं गुणोत्कर्षं न लेभिरे न प्राप्तवत्यः । नि । 'परभागो गुणोत्कर्ष' इति यादवः । तासामूर्मीणां चारुण्यादिगुणसाम्याच्च कश्चिद्विशेषोऽलक्ष्यत इत्यर्थः । अत एव सामान्यालङ्कारः । श्लो । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकते' ति लक्षणात् । शुभाननत्वसाम्बुरुहत्वाद्युभयविशेषणानां क्रमेणान्वयाद्यथासंख्यालङ्कारश्च । उक्तं च काव्यप्रकाशे—श्लो । 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वया' दिति । अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४२

ह्रदाम्भसीति ॥ व्यस्ताभ्यां विपर्यासिताभ्यां वधूकराभ्यां आहते एकेन करेणोत्सार्य अन्येन ताडित इत्यर्थः । ह्रदाम्भसि मृदङ्गध्वनिवद्धीरं गम्भीरं रवं ध्वनिमुज्झति सति तथा ध्वनति सतीत्यर्थः । मुहुः पुनःपुनः स्तनैः ताळो गीतवाद्यनृत्तानां परिच्छेदः । नि । 'ताळः कालक्रियामान' मित्यमरः । समाददे स्वीकृतं । उपमालङ्कारः ॥ ४३

श्रियेति ॥ श्रिया शोभया कमलानि हसद्भिः कमलतुल्यैरित्युपमा । हसतीर्ष्यत्यसूयतीति दण्डिना सदृशपर्यायपाठात् । सस्मितैः प्रतिमां प्रतिबिम्बत्वं गतैः । नि । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातने' त्यमरः । मुखैरलङ्कृतानि अम्बूनि यस्यास्सा । किञ्च सुरराजयोषितां कृतं आनुकूल्यं विहारसाधनसम्पादनाद्युपकारो यया सा । इत्थं योषिद्भिः उपकृता स्वयं च तासामुपकृतवती जाह्नवी गङ्गा स्वस्याः प्रसादस्य स्वच्छत्वस्य साफल्यं अर्थगौरवादिवत् षष्ठीसमासनिर्वाहः अवाप लेभे । अप्रसन्नाम्भसि विहारबिम्बग्रहणयोरसम्भवादित्यर्थः । स्वच्छाएव हि परैरुपक्रियन्ते स्वयं चोपकुर्वते तेषामिति भावः । कृतानुकारेति पाठे अनु-

परिस्फुरन्मीनविघट्टितोरवस्सुराङ्गनास्त्रासविलोलदृष्टयः ।

उपाययुः कम्पितपाणिपल्लवास्सखीजनस्यापि विलोकनीयताम् ॥

भयादिवाश्लिष्य झषाहतेऽम्भसि

प्रियं मुदा नन्दयतिस्म मानिनी ।

अकृत्रिमप्रेमरसाहितैर्मनो

हरन्ति रामाः कृतकैरपीहितैः ॥ ४६

तिरोहितान्तानि नितान्तमाकुलै-

रपां विगाहादलकैः प्रसारिभिः ।

---

कारोऽनुकूलकरणं उपकार इत्येवं व्याख्येयं । अत्र जाह्नवीविशेषेण पदार्थस्य प्रसादसाफल्यं प्रति हेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ ४४

**परीति ॥** परिस्फुरद्भिः विवर्तमानैः मीनैः विघट्टिता आहता ऊरवो यासां ताः अतएव त्रासविलोलदृष्टयः उद्वेगचञ्चलनेत्राः कम्पिताः पाणिपल्लवाः पल्लवपाणयः यासां ताः सुराङ्गनाः सखीजनस्यापि विलोकनीयतां दर्शनीयतां उपाययुरुपगताः किमुत तत्प्रियजनस्येति भावः । स्वभावोक्तिरलङ्कारः ॥ ४५

**भयादिति ॥** मानिनी दुर्लभस्वयंग्रहणेति भावः । अम्भसि झषाहते मीनकम्पिते सति । नि । 'पृथुरोमा झषो मत्स्य' इत्यमरः । भयादिव वस्तुतस्तु न तथेति भावः । किन्तु मुदा औत्सुक्येनैव आश्लिष्य प्रियमानन्दयति स्म । तथाहि—रामाः स्त्रियः अकृत्रिमः अनारोपितः यः प्रेमैव रसः तेन आहितैः जनितैः कृतकैः कृत्रिमैरपि ईहितैश्चेष्टितैः मनो हरन्ति । आरोपितमपि भयं प्रेममूलत्वान्मनोहरं बभूवेत्यर्थः । अत्र तुल्यानुभावेन भयेन सहजरागनिगूहनात् मीलनालङ्कारः । श्लो । 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहन' मिति लक्षणात् । स चार्थान्तरन्यासेन संसृज्यते ॥ ४६

**तिरोहितेति ॥** अपां विगाहात् जलमज्जनात् नितान्तं आकुलैः व्याकीर्णैः प्रसारिभिः आयतैः अलकैः तिरोहितान्तानि छन्नप्रान्तानि वधूनां

ययुर्वधूनां वदनानि तुल्यतां
द्विरेफबृन्दान्तरितैस्सरोरुहैः ॥ ४७

करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसम्भ्रमा ।
सखीष्वनिर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥

प्रियैस्सलीलं करवारिवारितः प्रवृद्धनिश्श्वासविकम्पितस्तनः ।
सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ४९

---

वदनानि द्विरेफबृन्दैः अन्तरितानि छन्नानि तैः सरोरुहैः तुल्यतां सादृश्यं ययुरित्युपमालङ्कारः ॥ ४७

**कराविति ॥** मानिनी पयस्यगाधे सति किलेत्यलीके । सज्जनभयादिवेत्यर्थः । जातसम्भ्रमा जातोद्वेगा । अतएव नवपल्लवाकृती करौ धुनाना कम्पयन्तीति । धूञ् कम्पन इत्यस्मात्क्र्यादिकात्कर्तरि लटश्शानच् । स्वादीनां ह्रस्व इति ह्रस्वः । सखीषु विषये अनिर्वाच्यं अवाच्यं अनिन्द्यमित्यर्थः । धार्ष्ट्यदूषितश्च न भवतीत्यधार्ष्ट्यदूषितः तं । वस्तुतो रागमूलत्वेऽपि भयमूलत्वारोपादिति भावः । प्रियाङ्गसंश्लेषं अवाप । अत्रापि तुल्याङ्गेन भयेनागन्तुकेन सहजानुरागनिगूहनान्मीलनालङ्कारः । तदुक्तं काव्यप्रकाशे—श्लो । 'समानलक्षणं वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुकेनापि तन्मीलनमुदाहृत' मिति ॥ ४८

**प्रियैरिति ॥** प्रियैः कामिभिस्सलीलं करवारिभिः अञ्जलिजलैः दारितः अवरुद्धस्सिक्त इत्यर्थः । प्रवृद्धैः सन्ततैः निश्वासैः विहारश्रमजनितैः विकम्पितौ स्तनौ यस्य सः । सविभ्रमं सविलासं आधूतानि कराग्रपल्लवानि पाणिपल्लवानि येन सः विलसनशीला विलासिनी । 'वौकपलसकत्थस्रम्भ 'इति घिनुण् । सैव जनः जातावेकवचनं यथार्थतामाप । उक्तरीत्या अनेकविलासवत्तया यथार्थनामकत्वमवापेत्यर्थः । क्वचिद्गम्यमानार्थस्याप्रयोगः इति नाम्नो प्रयोगः । यथा माघे—'चिराय याथार्थ्यमलम्भि दिग्गजै' रिति क्वचित्प्रयुज्यते च । यथा रघुवंशे—'परन्तपो नाम यथार्थना' मेति । तथा नैषधेऽपि—'स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपति' रिति । स्वभावोक्तिरलङ्कारः ॥ ४९

उदस्य धैर्यं दयितेन सादरं प्रसादितायाः करवारिवारितम् ।
मुखं निमीलन्नयनं नतभ्रुवः श्रियं सपत्नीवदनादिवाददे ॥ ५०
विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः ।
सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम् ॥
निरञ्जने साचि विलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयति स्म विग्रहे वलिक्रिया चातिलकं तदास्पदम् ॥
प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः ।

---

**उदस्येति** ॥ दयितेन धैर्यं काठिन्यं उदस्य अपनीय अनुनीयेत्यर्थः । सादरं यथा तथा प्रसादितायाः सौमनस्यं गमितायाः नतभ्रुवः स्त्रियः सम्बन्धि-करवारिभिः वारितं अवरुद्धं अतएव निमीलती नयने यस्मिन् तन्मुखं सपत्नी-वदनादिव श्रियमाददे जग्राह । तदानीं तद्वदनस्य निश्श्रीकत्वात्तदीयश्रीग्रहण-मुत्प्रेक्ष्यते ॥ ५०

**विहस्येति** ॥ धृताम्भसि प्रियसेचनार्थं गृहीतजले पाणौ अञ्जलावि-त्यर्थः । प्रियेण विहस्य विधृते अवलम्बिते सति । अतएव मदनार्द्रचेतसः स्मरपर-वशाया इत्यर्थः । वध्वाः सम्बन्धि वीतोच्चयबन्धं विनिर्मुक्तनीवीग्रन्थि स्रंसमानमित्यर्थः । अंशुकं पयसा घनीकृता संश्लिष्टा काञ्ची सखीव बभार जग्राह—स्त्रीणां किल स्त्रीष्वेवायत्तं लज्जारक्षणमिति भावः ॥ ५१

**निरञ्जने इति** ॥ नतभ्रुवः अङ्गनायाः विग्रहे वपुषि अथवा विग्रहे प्रणयकलहे निरञ्जने निर्धूतकज्जले दृशौ कर्म । साचि विलोकितं तिर्यगीक्षणं कर्तृ । मण्डयति स्म । नि । 'तिर्यगर्थे साचि'रित्यमरः । अयावकं क्षालितलाक्षारागं ओष्ठ-पल्लवं वेपथुः कम्पः मण्डयति स्म 'ट्वितोऽथु' जित्यथुच् अतिलकं वीतवि-शेषकं तदास्पदं तिलकस्थानं ललाटं 'आस्पदं प्रतिष्ठाया' मिति निपातः । वलिक्रिया रेखाबन्धः भ्रुकुटीरचनेति यावत् । मण्डयति स्म तदानीं निरलङ्कार-स्याप्यङ्गनाशरीरस्य तत्तच्छरीरविकारैरेवालङ्कारस्समजनीत्यर्थः ॥ ५२

**प्रियेणेति** ॥ काचित्प्रियेण विपक्षतः सपत्नीतः चरमं पश्चात् सिक्ता सती चुकोप सान्त्वनैः अनुनयैः तत्कृतप्रियभाषणैरित्यर्थः । न तुतोष । तथाहि—

जनस्य रूढप्रणयस्य चेतनः किमप्यमर्षोऽनुनये भृशायते ॥ ५३

निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे ॥

इत्थं विहृत्य वनिताभिरुदस्यमानं
पीनस्तनोरुजघनस्थलशालिनीभिः ।
उत्सर्पितोर्मिचयलङ्घिततीरदेश-
मौत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ॥ ५५

---

रूढप्रणयस्य गाढप्रेम्णः जनस्य सम्बन्धी चेतनः अमर्षः प्रकोपः किमपि कुतो वा हेतोः अनुनये सति भृशायते गाढो भवति । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हल' इति क्यङ् । अन्यत्र प्रशान्तिहेतुरनुनयः । अत्र तु प्रकोपायैव भवति । तत्र कारणं तु न ज्ञायत इत्यर्थः ॥ ५३

**निमीलदिति ॥** प्रियोपकण्ठः प्रियस्य समीपे अत्यन्तसंयोगे द्वितीया । निमज्जतीनां विगाहमानानां अतएव निमीलन्ति निमिषन्ति आकेकराणि आकेकरवन्ति लोलानि चक्षूंषि यासां तासां । आकेकरलक्षणं तु नृत्यविलासे—श्लो । 'दृष्टिराकेकरा किञ्चित् स्फुटापाङ्गे प्रसारिता । मीलितार्धपुटा लोके किञ्चिद्व्यावृत्ततारके'ति । तासां स्त्रीणां कृतः गात्राणां वेपथुः कम्पो येन सः । श्वसितैः निश्वासैः उद्धतौ उत्क्षिप्तौ स्तनौ येन सः । श्रमः खेदो नु । श्लो । 'श्रमः खेदोध्वरत्यादे'रिति दशरूपके । मदनो नु पप्रथे प्रादुर्बभूव । निमज्जनप्रियसन्निधानरूपोभयकारणसम्भवान्नेत्रनिमीलनगात्रकम्पनिश्श्वासाद्यनुभावसाधारण्याच्च सन्देहः सएवालङ्कारः ॥ ५४

**इत्थमिति ॥** पीनैः स्तनाः ऊरवः जघनस्थलानि च तैः शालन्त इति तथोक्ताभिरिति सलिलनोदनसामर्थ्योक्तिः । स्थलस्य साक्षात् प्राण्यंगत्वाभावान्न द्वंद्वैकवद्भावः । वनिताभिः इत्थं विहृत्य उत्तरन्तीभिरिति शेषः । उदस्यमानं नुद्यमानं उत्सर्पितैरुपरिभागं प्रापितैः ऊर्मिचयैः लङ्घितः अभिव्याप्तः तीरदेशो येन तद्वारि । औत्सुक्यं विरहासहिष्णुत्वं तेन नुन्नं प्रेरितमिवेत्युत्प्रेक्षा । 'नुदविदे'त्यादिना निष्ठानत्वं । पुरोग्रे प्रतस्थे प्रस्थितं । यथा पित्रादौ ग्रामान्तरं प्रयाते निवर्त्यमानोऽपि पुत्रादिर्वियोगासहिष्णुरौत्सुक्यात्पुरो याति तद्वदिति छाया ॥ ५५

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः ।
संरेजिरे सुरसरिज्जलधौतहारा-
स्तारा वितानतरळा इव यामवत्यः ॥ ५६

संक्रान्तचन्दनरसाहितवर्णभेदं
विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्मिनाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥ ५७

इति श्रीभारविकृतौ किरातार्जुनीये लक्ष्मीपदलाञ्छने महाकाव्ये अष्टमस्सर्गः ॥

---

**तीरान्तराणीति** ॥ रथाङ्गनाम्नां मिथुनानि चक्रवाकद्वन्द्वानि अन्यानि तीराणि तीरान्तराणि नीत्वा वियोज्येत्यर्थः अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः । विलोलिताः विलुलिताः सरोजवनश्रियः याभिस्ताः सुरसरिज्जलैः धौतहाराः क्षालितमुक्तावळयः ताः स्त्रियः तारावितानैः उडुगणैः तरळा भासुराः । नि । 'तरळो भासुरे हीरे चञ्चले पी'ति वैजयन्ती । यामवत्यो रात्रय इव संरेजिरे शुशुभिरे ॥ ५६

**सङ्क्रातेति** ॥ संक्रान्तैश्चन्दनरसैः मलयजद्रवैः आहितो वर्णभेदो रूपान्तरं यस्य तत् । विच्छिन्नानि त्रुटितानि यानि भूषणानि तेषां ये मणिप्रकराः मणिगणाः तेषां अंशुभिः चित्रं नानावर्णं । बद्धोर्मितरङ्गितं नाकवनिताभिः परिभुक्तमुक्तं पूर्वं परिभुक्तं पश्चान्मुक्तं । 'पूर्वकाले'त्यादिना तत्पुरुषः । सिन्धोर्गङ्गायाः सलिलं शेरते । अत्रेति शयनीयं तल्पं । 'कृत्यल्युटो बहुल'मिति बहुळग्रहणादधिकरणे अनीयर्प्रत्ययः । तस्य लक्ष्मीं बभार तादृशीं लक्ष्मीमवापेत्यर्थः । अतएव निदर्शनालङ्कारः । श्लो । 'असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शने'ति लक्षणात् ॥ ५७

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां अष्टमस्सर्गः ॥

## ॥ नवमस्सर्गः ॥

वीक्ष्य रन्तुमनसस्सुरनारीरात्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्तं भानुमानुपपयोधि ललम्बे ॥ १

मध्यमोपलनिभे लसदंशावेकतश्च्युतिमुपेयिषि भानौ ।
द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ॥ २

अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा ।

---

**वीक्ष्येति ॥** अथ जलक्रीडानन्तरं भानुमानंशुमानात्तचित्रपरिधान-विभूषाः स्वीकृतविविधवस्त्राभरणाः । सुरतसंनाहवतीरित्यर्थः । अत एव रन्तुमनसः । 'समानकर्तृकेषु तुमुन्' । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मकारलोपः । सुरनारीः वीक्ष्य तासां प्रियार्थं तत्प्रियार्थमिव । अवसरदान-रूपं प्रियं कर्तुमिवेत्यर्थः । फलोत्प्रेक्षेयम् । अस्तमदर्शनम् । मकारान्तमव्ययमेतत् । यातुं प्राप्तमुपपयोधि पयोधिसमीपे ललम्बे सस्रंसे । अस्मिन्सर्गे स्वागता-वृत्तम् 'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ १

**मध्यमेति ॥** मध्यमोपलनिभे नायकमणिसदृशे । 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः । 'शर्करायां स्त्रियां प्रोक्तः पुंस्यश्मन्युपलो मणौ' इति वैजयन्ती । लसदंशौ प्रसरद्रश्मौ भानावेकत एकस्मिन्भागे च्युतिं स्रस्ततामुपेयुषि प्राप्ते सति द्यौः परिवृत्त्या मध्याह्नातिक्रमेण विलोलां गत्वरीम् । अन्यत्र गात्रस्य तिर्यगावृत्त्या मुहुश्चलन्तीम् । वासरलक्ष्मीं हारयष्टिं मुक्तावलीमिवोवाह वहति स्म ॥ २

**अंशुपाणिभिरिति ॥** पतङ्गः सूर्यः । 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः । अतीव निर्भरम् । 'अत्यतीव च निर्भरे' इत्यमरः । पातुमिच्छुः पिपासुस्तृषितः सन् । पिबतेः सन्नन्तादुप्रत्ययः । अंशव एव पाणयस्तैः पद्मेषु जातं पद्मजं मधु मध्वेव । मध्विति श्लिष्टं रूपकम् । मकरन्दमद्यमित्यर्थः । 'मधु मद्ये पुष्परसे'

क्षीवतामिव गतः क्षितिमेष्यंल्लोहितं वपुरुवाह[1] पतङ्गः ॥ ३

गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ ।
आससाद विरहय्य धरित्रीं चक्रवाकहृद[2]यान्यभितापः ॥ ४

मुक्तमूललघुरुज्झितपूर्वः पश्चिमे नभसि सम्भृतसान्द्रः ।
सामि मज्जति रवौ न विरेजे खिन्नजिह्म इव रश्मिसमूहः ॥ ५

---

इत्यमरः । भृशमत्यन्तं रसयित्वास्वाद्य क्षीबतां मत्तत्वं गत इवेत्युत्प्रेक्षा । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । क्षितिमेष्यन्गमिष्यंल्लोहितं रक्तं वपुरुवाह । यथा मत्तः क्षीबतया क्षितौ लुठति रज्यते च तद्वदिति भावः । सूर्यस्य क्षितिविलयनमस्तमय इत्यागमः । अत्र रूपकोत्प्रेक्षयोः सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः ॥ ३

**गम्यतामिति ॥** सहस्रमरीचौ सूर्ये । लोहितो भवतीति लोहितायति । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष् । 'वा क्यषः' इति परस्मैपदे शतृप्रत्ययः । अत एव नयनानां गम्यतामुपगते दर्शनीयतां प्राप्ते सत्यभितापो धरित्रीं विरहय्य विहाय । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । चक्रवाकहृदयान्याससाद प्राप । अत्र धरित्र्या यादृशस्तीव्रार्ककरकृतसन्तापस्तादृक्चक्रवाकहृदयेषु विरहसन्तापः सञ्जात इति परमार्थः । परंतु तदुपक्रमानन्तरमेतस्याविर्भावात्स एवात्र संक्रान्त इत्यभेदाध्यवसायेनोपदेशः । अत एव भेदेऽभेदरूपातिशयोक्तिरलङ्कारः ॥

**मुक्तेति ॥** रवौ सामि मज्जत्यर्धास्तमिते सति । 'सामि त्वर्धे जुगुप्सायाम्' इत्यमरः । मुक्तं त्यक्तप्रायं मूलमाश्रयभूतो रविः । अन्यत्र स्वामी येन सोऽत एव लघुरल्पकश्च मुक्तमूललघुरुज्झितपूर्वस्त्यक्तपूर्वदिक्कः । अन्यत्र त्यक्तपूर्वजनः । पश्चिमे नभसि नभोभागम् । अन्यत्र क्वचिन्नीचस्थले । सम्भृतः संहतः सन् । अत एव सान्द्रश्च रश्मिसमूहः । आश्रितजनश्च ध्वन्यते । खिन्नश्चासौ जिह्मश्च । खिन्नेन दुःखेन जिह्मो वा । दीन इव न विरेजे । अत्र मुक्तमूलत्वादि प्रस्तुतविशेषणसाम्यादप्रस्तुताश्रितजनप्रतीतेः समासोक्तिः । तत्र वाच्यस्य रश्मिसमूहस्याचेतनस्यापि प्रतीयमानेन चेतनेनाभेदाभिधानाद्दुःखितत्वाद्युत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ५

---

1 'अवाप' 2 'मिथुनानि'

कान्तदूत्य इव कुङ्कुमताम्राः सायमण्डलमभि त्वरयन्त्यः ।
सादरं ददृशिरे वनिताभिः सौधजालपतिता रविभासः ॥ ६

अग्रसानुषु नितान्तपिशङ्गैर्भूरुहान्मृदुकरैरवलम्ब्य ।
अस्तशैलगहनं नु विवस्वानाविवेश जलधिं नु महीं नु ॥ ७

आकुलश्चलपतत्रिकुलानामारवैरनुदितौषसरागः ।
आययावहरिदश्वविपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ ८

---

**कान्तेति ॥** कुङ्कुमवत्कुङ्कुमेन वा ताम्राः । सायस्य सायंकालस्य । 'सायं साये प्रगे प्रातः' इत्यमरः । यन्मण्डलं तदभि तदुद्दिश्य त्वरयन्त्यस्त्वरां कारयन्त्यः सौधानां जालैर्गवाक्षैः पतिताः प्रविष्टाः । 'जालं गवाक्ष आनाये' इति वैजयन्ती । रविभासः सूर्यरश्मयः कान्तानां प्रेयसां दूत्य इव वनिताभिः सादरं यथा तथा ददृशिरे दृष्टाः । सायन्तनार्कभासां प्रियसमागमसूचकत्वादेव तासु स्त्रीणामादरोऽभवदित्यर्थः ॥ ६

**अग्रेति ॥** विवस्वान्सूर्योऽग्रेऽस्तशैलशिखरे ये सानवस्तेषु ये भूरुहास्तान्नितान्तपिशङ्गैरत्यन्तारुणैर्मृदुभिः करैरिव करैरंशुहस्तैरिति श्लिष्टरूपकम् । 'बलिहस्तांशवः कराः' इत्यमरः । यद्वा । करैर्मृदु श्लथमवलम्ब्य । अस्त इति शैलोऽस्तशैलः । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः । तस्य गहनं काननं नु जलधिं नु महीं न्वाविवेश । तपनस्य पतनसन्देह एव दृष्टः । पतनं तु क्व चास्य तन्न ज्ञायते । शीघ्रभावादिति भावः । अत्र तपने पतनस्यारोप्यमाणस्य गहनाद्यनेकविषयत्वेन सन्देहालङ्कारः ॥ ७

**आकुल इति ॥** चलानां कुलायेभ्यः कुलायान्प्रति चलतां पतत्त्रिकुलानां पक्षिसमूहानामारवैः शब्दैराकुलो व्याप्तः । अनुदितशब्देनाभावमात्रमुषः शब्देन सन्ध्यामात्रं च विवक्ष्यते । उषसि भव औषसः । 'सन्धिवेला-' इत्यादिना योगविभागादण्प्रत्ययः । अन्यथा कालाट्ठञ्स्यात् । तथा चानुदितौषसरागोऽविद्यमानसन्ध्याराग इत्यर्थः । एकत्रानुदयादन्यत्रास्तमयाच्चेति भवः । अहरिदश्वोऽविद्यमानसूर्यः । एकत्रानुदयादन्यत्रास्तमयाच्चेति भावः । अत एव

आस्थितः स्थगितवारिदपङ्क्त्या सन्ध्यया गगनपश्चिमभागः ।
सोर्मिविद्रुमवितानविभासा[1] रञ्जितस्य जलधेः श्रियमूहे ॥ ९

प्राञ्जलावपि जने नतमूर्ध्नि प्रेम तत्प्रवणचेतसि हित्वा ।
सन्ध्ययानुविदधे विरमन्त्या चापलेन सुजनेतरमैत्री ॥ १०

औषसातपभयादपलीनं वासरच्छविविरामपटीयः ।
संनिपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ११

---

विपाण्डुः । तिमिरानुदयादिति शेषः । दिनान्तः सायंकालो दिनमुखेन प्रातः कालेन तुल्यतामाययौ । तद्वभूवेत्यर्थः । अत एवोपमालङ्कारः ॥ ८

**आस्थित इति ॥** स्थगितवारिदपङ्क्त्या पिहितमेघवृन्दया सन्ध्ययास्थित आक्रान्तो व्याप्तो गगनपश्चिमभागः । सोर्मिः । ऊर्मिसंक्रान्त इत्यर्थः । तया विद्रुमवितानविभासा प्रवालप्रकरकान्त्या रञ्जितस्य स्वसावर्ण्यमापादितस्य जलधेः श्रियमूहे । सन्ध्याया रक्तवर्णत्वादिति भावः । वहतेः कर्तरि लिट् । तत्सदृशीं श्रियमुवाहेत्यर्थः अत एव निदर्शनालङ्कारः ॥ ९

**प्राञ्जलाविति ॥** प्रबद्धोऽञ्जलिर्येन तस्मिन्प्राञ्जलौ बद्धाञ्जलौ । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । प्रादिभ्यो धातुजस्य बहुव्रीहिर्वाच्यो वोत्तरपदलोपश्च । नतमूर्ध्नि नमस्कुर्वाणे तत्प्रवणं तत्र सन्ध्यायामेवाहितं चेतो यस्य तस्मिन्नेवंविधेऽपि जने विषये प्रेम हित्वा विहाय विरमन्त्या निवर्तमानया । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । सन्ध्यया चापलेनास्थैर्येण । युवादित्वादणूप्रत्ययः । सुजनादितरो दुर्जनस्तस्य मैत्री सख्यमनुविदधेऽनुचक्रे । कर्मणि लिट् । यथा दुर्जनमैत्री स्निह्यन्तमपि जहाति तद्वत्सन्ध्यापि सेवमानं जनमहासीदित्यर्थः । मित्रस्य कर्म मैत्री । अणन्तान्ङीप् । अत्र सन्ध्यादुर्जनमैत्र्योश्चापलं समानधर्मोऽनुविधानम् । अत एवार्थरूपेणेयमुपमा ॥ १०

**औषसेति ॥** औषसात्प्राभातिकादातपाद्भयं तस्मादिवेत्युत्प्रेक्षा । अपलीनं क्वचिद्गूढं वासरच्छवेरातपस्य विरामाद्धेतोः पटीयः प्रभविष्णुतरम् । अन्धं करोतीत्यन्धकारं ध्वान्तम् । 'अन्धकारोऽस्त्रियां ध्वान्तम्' इत्यमरः । अथ

---

1 'विभङ्गैः'

एकतामिव गतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे ।
भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः ॥ १२

इच्छतां सह वधूभिरभेदं यामिनीविरहिणां विहगानाम् ।
आपुरेव मिथुनानि वियोगं लङ्घ्यते न खलु कालनियोगः ॥१३

यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ ।
नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिण्या ॥ १४

---

सन्ध्यापगमनानन्तरं शनकैर्मन्दमन्दं निम्नात्संनिपत्यागत्य समानि समस्थलान्युदवाप व्यानशे । अत्र प्रस्तुतान्धकारविशेषणसाम्यादप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः । उत्प्रेक्षात्वङ्गतः स्यात् ॥ ११

**एकतामिति ॥** एकतामभेदं गतस्येव । तमोव्याप्त्या तथा प्रतीतेरियमुत्प्रेक्षा । महतः शैलादेरपि कस्यचित्कस्यापि पदार्थस्य विवेको भेदो नोपलेभे न गृहीतः । अत एवोत्प्रेक्षते—पतितेनास्तमितेन भास्वता सूर्येण । 'भास्वद्विवस्वत्सप्ताश्व—' इत्यमरः । भुवनानाम् । भुवनस्थपदार्थानामित्यर्थः । विशेषा भूधरादिभेदा आत्मनि स्वस्मिन्नेव निदधिर इव निहिता इव । कथमन्यथा नोपलभ्येरन्नित्यर्थः । अत्रोत्प्रेक्षयोः सजातीययोः सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः ॥ १२

**इच्छतामिति ॥** वधूभिः स्वकामिनीभिः सहाभेदमवियोगमिच्छताम् । तथा सङ्कल्पवतामपीत्यर्थः । यामिनीषु विरहिणाम् । नियतवियोगानामित्यर्थः । रहतेरावश्यकेऽर्थे णिनिः । यद्वा निन्दायामिनिः । तेषां विहगानां चक्रवाकाणां मिथुनानि वियोगमापुरेव । न तु नापुरित्ययोगव्यवच्छेदः । तथाहि । कालनियोगो दैवाज्ञा न लङ्घ्यते खलु । दुर्वार इत्यर्थः ॥ १३

**यच्छतीति ॥** शकुन्तौ चक्रवाकपक्षिणि । सामान्यस्य प्राकरणिकविशेषपर्यवसानात् । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । अन्तिकगते समीपस्थेऽपि दयितायै चक्रवाक्यै प्रतिमुखमभिमुखं यथा तथा वाचं यच्छति वाचमेव ददाने । न तु सङ्गच्छमाने सतीत्यर्थः । 'पाघ्राध्मा—' इत्यादिना दाणो यच्छादेशः । अम्बुरुहिण्या नलिन्योज्झितहर्षं चक्रवाकदुर्दशादर्शनादिव त्यक्तविकासं पङ्कजं मुखमिव नतिं नम्रत्वं नीयते स्म नीतम् । 'प्रधानकर्मण्या-

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ १५

रात्रिरागमलिनानि विकासं पङ्कजानि रहयन्ति विहाय ।
स्पष्टतारकमियाय नभः श्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १६

---

ख्येये लादीनाहुर्द्विकर्मणाम्' इति नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि लिट् । प्रायेण दुःखदर्शनात्स्त्रियः खिद्यन्ते । विशेषेण विरहदर्शनादिति भावः । अत्र पङ्कजावनतेश्चक्रवाकविक्रोशानन्तर्यात्तद्धेतुकत्वमुत्प्रेक्ष्यते । तच्च मुखोपमेयमम्बुरुहिण्या कामिनीसाम्यं गमयन्त्या निरुह्यत इत्युपमोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः । व्यञ्जकाप्रयोगात्प्रतीयमानोत्प्रेक्षा ॥ १४

**रञ्जिता इति ॥** तिमिरेणान्धकारेण विविधास्तरवः शैलाश्च रञ्जिताः स्वसावर्ण्यमापादिता नु । अन्यथा कथमेषां नीलाढ्यत्वमिति भावः । गगनं नामितं नु । आभूतलादिति शेषः । 'मितां ह्रस्वः' इत्यत्र वाशब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणान्न ह्रस्वः । यद्वा गगनं स्थगितमाच्छादितं नु । उभयत्रापि तमसावृतत्वान्न दृश्यत इति भावः । तथा धरित्री विषमेषु निम्नोन्नतेषु पूरिता समीकृता नु । अन्यथा तद्विवेकः कथं न स्यादिति भावः । ककुभो दिशश्च संहृता नु लुप्ताः किम् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । कथमन्यथा न दृश्यन्त इति भावः । अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकमारोप्य सन्दिग्ध इति सन्देहालङ्कारः । अनेन नुशब्दस्य सम्भावनाद्योतकत्वमत्रोत्प्रेक्षाप्रकारमित्यलङ्कारसर्वस्वकारः ॥ १५

**रात्रीति ॥** श्रीः शोभा कर्त्री रात्रेः सन्ध्याया रागेण स्वच्छायोपरञ्जनेन मलिनान्यत एव विकासं रहयन्ति त्यजन्ति । रहतेस्त्यागार्थाच्छतृप्रत्ययः । पङ्कजानि विहाय त्यक्त्वा स्पष्टतारकं नभः खमियाय प्राप । तथाहि । सर्वो जनो निरापदि निर्बाधस्थले वस्तुं स्थातुम् । 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः । 'वसिश्च सान्तेषु वसिः प्रसारिणि' इति वचनात् । इच्छति ॥ १६

व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्तिर्वासवस्य दिशमंशुसमूहः ॥ १७

उज्झती शुचमिवा[1]शु तमिस्राम[2]न्तिकं व्रजति [3]तारकराजे ।
दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥ १८

नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥ १९

---

अस्तादिसन्ध्यान्तं वर्णयित्वा चन्द्रोदयवर्णनमारभते—

**व्यानश इति ॥** शशधरेण चन्द्रेण विमुक्तः क्षिप्तः केतकीकुसुमकेसर इव पाण्डुर्लम्भिता प्रापिता कान्तिर्यस्य सोंऽशुसमूहो रश्मिसमूहश्चूर्णस्य कर्पूरक्षोदस्य मुष्टिरिव मुष्टिशब्दस्य द्विलिङ्गत्वेऽप्यत्र पुंलिङ्गतैव ग्राह्या । उपमेयानुसारात्। वासवस्येन्द्रस्य दिशं प्राचीं व्यानशे व्याप । अनेन दिशानिशाकरयोर्नायिकानायकौपम्यं गम्यते ॥ १७

**उज्झतीति ॥** इन्द्रस्येयमैन्द्री दिक्प्राची तारकराजे नक्षत्रनाथे । 'कनीनिकायां नक्षत्रे तारकं तारकापि च' इति विश्वः । अन्तिकं समीपं व्रजति सति । आशु तमिस्रामन्धतमसम् । 'तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे न ना' इति वैजयन्ती । शुचिमिव । विरहदुःखमिवेत्यर्थः । उज्झती विजहती प्रसादो नैर्मल्यमेव गुणः स एव मण्डनं यस्य तत् । रश्मयो हास इव तेन विशदं मुखमिव मुखमग्रभागम् । श्लिष्टोपमेयम् । ऊहे वहति स्म । अत्र दिक्चन्द्रयोर्नायिकानयकौपम्यं गम्यते ॥ १८

**नीलेति ॥** शैलरुद्धवपुष उदयगिरितिरोहितमण्डलस्य सितरश्मेरिन्दोः संबन्धि नीलनीरजनिभे श्यामकमलतुल्ये ख आकाशे निपतत्प्रसरत् । हिमवद्गौरं शुभ्रं करजालमंशुसमूहो वारिधेः पयसि निपतद्गाङ्गमम्भ इव रराज । उपमानेऽपि विशेषणानि योज्यानि ॥ १९

---

1 'आ' 2 'अन्तिके' 3 'तारकनाथे'

द्यां निरुन्ध[1]दतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा शंभुनेव [2]करिचर्म चकासे ॥ २०

अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां [3]जहति दीधितिजाले ।
निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥ २१

लेखया विमलविद्रुमभासा सन्ततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया [4]कनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥ २२

दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः ।

---

**द्यामिति ॥** द्यां निरुन्धदाकाशमावृण्वदतिनीलघनाभं मेचकम् । उद्यन्तः करा अंशवो हस्ताश्च यस्य तेन । असिताभ्य इतराः शुभ्रा भासो यस्य तेन चन्द्रेण पुरस्तात्प्राच्यामग्रे च क्षिप्यमाणं नुद्यमानं ध्वान्तं शंभुना क्षिप्यमाणं करिचर्मेव चकासे । उपमानेऽपि विशेषणानि योज्यानि ॥ २०

**अन्तिकेति ॥** अन्तिकान्तिकेऽतिसमीपे । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयवद्भावात्सुपो लुक् । अन्तिकान्तिकगतेनेन्दुना विसृष्टे मुक्ते दीधितिजाले किरणसमूहे जिह्मतां संकोचं जहति त्यजति सति तिमिरभारैस्तमःस्तोमैर्निरोधादुपरोधान्निःसृतो निर्गतो दिगन्त उच्छ्वसन्प्राणन्निव रराजेत्युत्प्रेक्षालङ्कारः ॥ २१

**लेखयेति ॥** इन्दुर्विमलविद्रुमभासा स्वच्छप्रवालसवर्णया लेखया कलया सततं सान्द्रं तिमिरमादिवराहः कनकस्य टङ्कः शिलाभेदकं शस्त्रम् । 'टङ्कः पाषाणदारणः' इत्यमरः । तद्वत्पिशङ्ग्या लोहितवर्णया । 'पिशङ्गादुपसंख्यानम्' इति ङीप् । दंष्ट्रया भुवो मण्डलमिव । उदास उच्चिक्षिपे । अस्यतेः कर्तरि लिट् । सोपसर्गादस्यतेरात्मनेपदं विकल्पात् ॥ २२

**दीपयन्निति ॥** अथोदयानन्तरं किरणौघैर्नभो दीपयन्प्रकाशयन्कुङ्कु-

---

1 'अभिनील' 2 'गजचर्म' 3 'त्यजति' 4 'कनकभङ्ग'

तं शम्भुराक्षिप्तमहेषुजालं लौहैः शरैर्मर्मसु निस्तुतोद ।
हृतोत्तरं तत्त्व[1]विचारमध्ये [2]वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३

जहार चास्मादचिरेण वर्म ज्वलन्मणिद्योतित[3]हैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४

विकोश[4]निर्धौततनोर्महासेः फणावतश्च त्वचि विच्युतायाम् ।
प्रतिद्विपाबद्धरुषः [5]समक्षं नागस्य चाक्षिप्तमुखच्छदस्य ॥ ४५

---

तव्यमालितं स्थितिः । बहुलग्रहणाद्भावे तव्यप्रत्ययः । साहसं न क्षमं न योग्यम् । भर्ता सम्भावितस्यावसरेऽनुपकर्तुरनुजोविनस्तत्साम्मुख्यमनुचितमित्यर्थः ॥ ४२

**तमिति ॥** शम्भुराक्षिप्तान्याहतानि महेषुजालानि यस्य तं मुनिं तत्त्वविचारमध्ये वादमध्ये हृतोत्तरं निरुत्तरीकृतं विपक्षं प्रतिवादिनं वक्ता वादी गुरुभिर्दोषैर्निग्रहस्थानैरिव लौहैर्लोहमयैः शरैर्मर्मसु निस्तुतोद व्यथयामास ॥ ४३

**जहारेति ॥** किं च । अस्मान्मुनेरचिरेण शीघ्रं ज्वलद्भिर्मणिभिर्द्योतिता हैम्यः सौवर्ण्यो लेखा यस्य तत्तथोक्तं वर्म कवचम् । चण्डो मरुत्पवनः पतङ्गात्सूर्यादेकनीलं केवलकृष्णवर्णम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । तडित्वतस्तडिद्युक्तस्याम्बुदस्य खण्डमिव जहार । तदा भगवन्मायया मुक्तकञ्चुको मुनिर्मेघनिर्मुक्तः सूर्य इव दिदीपे इति भावः ॥ ४४

अथ युग्मेनाह—

**विकोशेति ॥** सोऽर्जुनः । तनुं त्रायत इति तनुत्रं वर्म । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । तेन विना । विकोशः कोशादुद्धृतो निर्धौततनुः शाणोल्लीढमूर्तिः । ततो विशेषणसमासः । तस्य विकोशनिर्धौततनोर्महासेर्महाखड्गस्य तथा त्वचि विच्युतायां सत्यां फणावतश्च मुक्तकञ्चुकस्याहेश्च प्रतिद्विपे प्रतिगज आबद्धरुषो बद्धकोपस्य समक्षं प्रतिगजस्याग्र आक्षिप्तमुखच्छदस्य निरस्तमुखावरणस्य नागस्य गजस्य च ॥ ४५

---

1 'विचारमार्गे'; 'विचारणायाम्' 2 'वादीव' 3 'हेमलेखम्'
4 'निर्धूत' 5 'सरोषम्'

विबोधितस्य ध्वनिना घनानां हरेरपेतस्य च शैलरन्ध्रात् ।
निरस्तधूमस्य च रात्रिवह्नेर्विना तनुत्रेण [1]रुचिं स [2]भेजे ॥ ४६

अचित्ततायामपि नाम युक्तामनूर्ध्वतां प्राप्य तदीयकृच्छ्रे ।
महीं गतौ ताविषुधी तदानीं विवव्रतुश्चेतनयेव योगम् ॥ ४७

स्थितं विशुद्धे नभसीव सत्वे धाम्ना तपोवीर्यमयेन युक्तम् ।
शस्त्राभिघातैस्तमजस्रमीशस्त्वष्टा विवस्वन्तमिवोल्लिलेख ॥ ४८

संरम्भवेगोज्झित[3]वेदनेषु गात्रेषु [4]बाधिर्यमुपागतेषु ।

---

**विबोधितस्येति ॥** घनानां ध्वनिना गर्जितेन विबोधितस्य । शैलरन्ध्रात्कन्दरादपेतस्य निष्क्रान्तस्य हरेः सिंहस्य च । तथा निरस्तधूमस्य गतधूमस्य रात्रिवह्नेश्च रुचिं शोभां भेजे । एतेनास्य तीक्ष्णत्ववैरनिर्यातनत्वरणदुर्मदत्वमनस्वित्वतेजस्वित्वान्युक्तानि । अत्र रुचिमिव रुचिमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धी निदर्शनालङ्कारो मालया संसृष्टः ॥ ४६

**अचित्ततायामिति ॥** तदानीं कवचपतनसमये महीं गताविषुधी निषङ्गावचित्ततायामप्यचेतनत्वेऽपि तदीयकृच्छ्रे स्वामिव्यसने युक्तां योग्याम् । नाम किल । अकिञ्चित्करत्वादिति भावः । अनूर्ध्वतामवाङ्मुखत्वं प्राप्य चेतनया प्राणिसाधारणज्ञानेनेव योगं सम्बन्धं विवव्रतुरिवेत्युत्प्रेक्षा । अचेतनत्वेऽप्यवाङ्मुखत्वादिचेतनधर्मयोगादिति भावः ॥ ४७

**स्थितमिति ॥** विशुद्धे निर्मले नभसि सत्वे सत्वगुणे स्थितं तपोवीर्यमयेन तपोवीर्याभ्यासागतेन धाम्ना तेजसा युक्तं तमर्जुनमीशस्त्वष्टा विश्वकर्मा विवस्वन्तं सूर्यमिवाजस्रं निरन्तरं शस्त्राभिघातैः शस्त्रकर्षणैरुल्लिलेख ततक्ष ॥ ४८

**संरम्भेति ॥** संरम्भवेगेन सम्भ्रमातिशयेनोज्झितवेदनेषु त्यक्तदुःखेषु गात्रेषु बाधिर्यं स्तैमित्यमुपागतेषु सत्सु न गणिता इषुराशयो येन तस्यागणि-

---

1 'रुचम्' 2 'लेभे' 3 'चेतनेषु' 4 'चाधैर्यम्'

[1]मुनेर्बभूवा[2]गणितेषुराशेर्लौहस्तिरस्कार इवात्ममन्युः ॥ ४९

ततोऽनुपूर्वायतवृत्तबाहुः श्रीमान्क्षरल्लोहित[3]दिग्धदेहः ।
आस्कन्द्य वेगेन विमुक्तनादः क्षितिं विधुन्वन्निव [4]पार्ष्णिघातैः ॥

साम्यं गतेनाशनिना मघोनः [5]शशाङ्कखण्डाकृतिपाण्डुरेण ।
शम्भुं बिभित्सुर्धनुषा जघान [6]स्तम्बं विषाणेन महानिवेभः ॥

रयेण सा संनिदधे पतन्ती भवोद्भवेनात्मनि चापयष्टिः ।

---

तेषुराशेर्मुनेरर्जुनस्यात्ममन्युः स्वकोपो लोहस्य विकारो लौहः कार्ष्णायसः तिरस्क्रियत आच्छाद्यतेऽनेनेति तिरस्कारः कञ्चुक इव बभूव । रोषवशान्न किञ्चित्प्रहारदुःखमज्ञासीदित्यर्थः । क्रोधैकवर्मणां वीराणां किमन्यैर्लोहभारैरिति भावः ॥

अथ युग्मेनाह—

**तत इति ॥** ततोऽनन्तरमनुपूर्वौ पूर्वमनुगतौ गोपुच्छाकारावायतौ दीर्घौ वृत्तौ वर्तुलौ च बाहू यस्य स श्रीमाञ्शोभावान्क्षरल्लोहितदिग्धदेहः स्रवद्रुधिरलिप्तगात्रः । पार्ष्णिघातैश्चरणतलाघातैः । 'तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां पार्ष्णिरधस्तयोः' इत्यमरः । क्षितिं विधुन्वन्प्रकम्पयन्निव वेगेनास्कन्द्याभिद्रुत्य विमुक्तनादः सोऽर्जुनः ॥ ५०

**साम्यमिति ॥** मघोन इन्द्रस्याशनिना वज्रेन सह साम्यं गतेन वज्रकल्पेन शशाङ्कस्य खण्डं शकलं तस्येवाकृतिर्यस्य । तद्वद्वक्रमित्यर्थः । पाण्डुरं च । तद्वदेवेति भावः । तेन शशाङ्कखण्डाकृतिपाण्डुरेण धनुषा शम्भुं बिभित्सुर्भेत्तुमिच्छुः तम् । महानिभो गजो विषाणेन दन्तेन स्तम्बमिव जघान ॥ ५१

**रयेणेति ॥** रयेण वेगेन पतन्ती सा चापयष्टिर्भवस्य संसारस्योद्भव उत्पत्तिर्यस्मात्तेन भवोद्भवेनेश्वरेण पर ओजसि परमे ज्योतिषि स्थितेन जह्नुना

---

1 'बभूव तस्या' 2 'अगणिताहितेषोः' 3 'धातुदिग्धः'; पङ्कदिग्धः' 4 'पार्ष्णिभागैः' 5 'शशाङ्कलेखाः' 6 'स्तम्भम्'

समुद्धता सिन्धुरनेकमार्गा [1]परे स्थितेनौजसि जह्नुनेव ॥ ५२

विकार्मुकः कर्मसु [2]शोचनीयः परिच्युतौदार्य इवोपचारः ।
विचिक्षिपे शूलभृता सलीलं स पत्रिभिर्दूरमदूरपातैः ॥ ५३

उपोढकल्याणफलोऽभिरक्षन्वीरव्रतं पुण्यरणाश्रमस्थः ।
[3]जपोपवासैरिव संयतात्मा तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४

ततोऽग्रभूमिं व्यवसायसिद्धेः सीमानमन्यैरतिदुस्तरं सः ।
तेजः श्रियामाश्रयमुत्तमासिं साक्षादहङ्कारमिवाललम्बे ॥ ५५

---

राजर्षिणा समुद्धतात्युत्कटानेकमार्गा त्रिस्रोताः सिन्धुर्गङ्गेवात्मनि संनिदधे सम्यङ्निहिता । अन्तर्निलायितेत्यर्थः ॥ ५२

**विकार्मुक इति ॥** विकार्मुको भग्नचापोऽत एव परिच्युतोदार्यौ दानवर्जित उपचारः सत्कार इव कर्मसु रणक्रियासु कृत्येषु च शोचनीयः शोच्योऽपूज्यश्च सत्त्वावष्टम्भेनाभग्नचित्तत्वाच्च सोऽर्जुनः शूलभृता शिवेन सलीलं सहेलं यथा तथाऽदूरपातैरतिगाढप्रहारैः पत्रिभिः शरैर्दूरमत्यन्तं विचिक्षिपे नुन्नः ॥ ५३

**उपोढेति ॥** उपोढमासन्नं कल्याणफलमस्त्रलाभरूपं स्वर्गादिकं च यस्य स वीरव्रतमाहवादनिवृत्तिरूपं तीव्रं तपश्चाभिरक्षन्पालयन्पुण्यो यो रण एवाश्रमस्तत्र तिष्ठतीति पुण्यरणाश्रमस्थः संयतात्मा नियमितचित्तो मुनिरर्जुनः कश्चित्तपस्वी च तैः शिवस्य महादेवस्येषुभिः शरैर्जपोपवासैरिव तेपे तप्तः । तपतेः कर्मणि लिट् ॥ ५४

**तत इति ॥** ततश्चापान्तर्धानानन्तरंसोऽर्जुनोऽग्रभूमिं विपदि गन्तव्यस्थानम् । शरण्यमित्यर्थः । कुतः । व्यवसायसिद्धेर्युद्धोद्योगसिद्धेः सीमानमवधिम् । साधकतममित्यर्थः । अन्यैः परैरतिदुस्तरं दुरतिक्रमं तेजः श्रियां प्रतापसम्पदामाश्रयम् । हेतुमित्यर्थः । उत्तमासिं महाखड्गम् । 'सन्महत्—' इत्यादिना समासः । साक्षादहङ्कारं सविग्रहमभिमानमिवालम्बे जग्राह ॥ ५५

---

1 'परिस्थितेन' 2 'शोच्यपूज्यः' 3 'महोपवासैः'; व्रतोपवासैः'

शरानवद्यन्ननवद्यकर्मा चचार चित्रं [1]प्रविचारमार्गैः ।
हस्तेन निस्त्रिंशभृता [2]स दीप्तः सार्काशुना वारिधिरूर्मिणेव ॥

यथा निजे वर्त्मनि भाति भाभिश्छायामयश्चाप्सु सहस्ररश्मिः ।
तथा [3]नभस्याशु [4]रणस्थलीपु स्पष्टद्विमूर्तिर्ददृशे स भूतैः ॥ ५७

[5]शिवप्रणुन्नेन शिलीमुखेन त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणेर्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८

आक्षिप्तचापावरणेषुजालश्छिन्नोत्तमासिः स मृधेऽ[6]वधूतः ।

---

**शरानिति ॥** अनवद्यकर्मागर्ह्यकर्मा । 'अवद्यपण्य—' इत्यादिना निपातः । शरानवद्यन्खण्डयन्वीरो निस्त्रिंशभृता खड्गयुक्तेन हस्तेन सार्कांशुनार्कांशुसहितेनोर्मिणा तरङ्गेण वारिधिरिव दीप्तो दीपितः सोऽर्जुनः प्रविचारमार्गैः खड्गिनां गतिभेदैश्चित्रं यथा तथा चचार ॥ ५६

**यथेति ॥** भाभिर्दीप्तिभिरुपलक्षितः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । सहस्ररश्मिरर्को यथा निजे वर्त्मनि नभसि छायामयः प्रतिबिम्बरूपः सन्नप्सु स्पष्टद्विमूर्तिर्भाति तथा सोऽर्जुनो नभस्याकाशे रणस्थलीपु च स्पष्टे द्वे मूर्ती यस्य सः स्पष्टद्विमूर्तिः सन् भूतैर्गणैर्ददृशे दृष्टः । यथैकोऽर्को नभस्यप्सु चानेक इव दृश्यते तथा सोऽपि दिवि भुवि चाशुसञ्चाराद्यौगपद्यभ्रमादेवैकोऽप्यनेक इव गणैर्दृष्ट इत्युत्प्रेक्षा ॥ ५७

**शिवेति ॥** शिवेन प्रणुन्नः क्षिप्तस्तेन शिलीमुखेन त्सरुप्रदेशान्मुष्टिप्रदेशमवधिं कृत्वा 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । अपवर्जिताङ्गो लूनविग्रहोऽसिः खड्गस्तस्यार्जुनस्य पाणेः कराद्घनस्य मेघस्य वप्रात्तटाद्वैद्युतो विद्युत्सम्बन्ध्यग्निरिव ज्वलन्पपात ॥ ५८

**आक्षिप्तेति ॥** आक्षिप्तान्यपहृतानि चापावरणेषुजालानि धनुर्वर्मबाणसमूहा यस्य स छिन्नोत्तमासिर्लूनमहाखड्गो मृधे रणे । 'मृधमास्कन्दनं

---

1 'प्रतिचार' 2 'अतिदीप्तः' 3 'भ्रमन्नाशु' 4 'वनस्थलीपु'
5 'पुस्तकान्तरे प्रथमद्वितीयपादयोर्व्यत्ययः' 6 'अभिभूतः'

रिक्तः प्रकाशश्च बभूव भूमे[1]रुत्सादितोद्यान इव प्रदेशः ॥ ५९

स [2]खण्डनं प्राप्य परा[3]दमर्षवा-
न्भुजद्वितीयोऽपि विजेतुमिच्छया ।
ससर्ज वृष्टिं परिरुग्णपादपां
[4]द्रवेतरेषां पयसामिवाश्मनाम् ॥ ६०

[5]नीरन्ध्रं परिगमिते क्षयं पृषत्कै-
र्भूतानामधिपतिना शिलाविताने ।
उच्छ्रायस्थगितनभोदिगन्तरालं
चिक्षेप क्षितिरुहजालमिन्द्रसूनुः ॥ ६१

---

संख्यम्' इत्यमरः । अवधूतो निरस्तः सोऽर्जुन उत्सादितमुत्पाटितमुद्यानं यस्य सः भूमेः प्रदेशो भूमिभाग इव रिक्तः शून्यः प्रकाशो निःसम्बाधश्च । दृश्य इति यावत् । बभूव ॥ ५९

**स इति ॥** परात्परस्माच्छत्रोः 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पान्नस्मादादेशः । खण्डनं भङ्गं प्राप्यामर्षवान्सोऽर्जुनो भुजद्वितीयो भुजमात्रसहायः सन्नपि विजेतुमिच्छया द्रवेभ्य इतराणि तेषां द्रवेतरेषां कठिनानां पयसामिव । करकाणामित्यर्थः । अश्मनां सम्बन्धिनीं परिरुग्णा भग्नाः पादपा यया सा तां वृष्टिं ससर्ज । अश्मभिर्जवानेत्यर्थः ॥ ६०

**नीरन्ध्रमिति ॥** शिलाविताने शिलाजाले भूतानामधिपतिना शिवेन पृषत्कैर्बाणैः क्षयं परिगमिते नीते सतीन्द्रसूनुरर्जुन उच्छ्रायेणोत्सेधेन स्थगितमाच्छादितं नभो दिशामन्तरालं च येन तन्नीरन्ध्रं सान्द्रम् । रोहन्तीति रुहाः । इगुपधलक्षणः कप्रत्ययः । क्षितौ रुहा वृक्षास्तेषां जालं चिक्षेप प्रेरयामास । 'उच्छ्रायं गमितवति' इति प्रामादिकः पाठः ॥ ६१

---

1 'उत्पादितः; 'उत्सारित' 2 'खण्डनाम्' 3 अमर्षात्'
4 'जवेन मेघः' 5 'नीरन्ध्रे' परिगामिते' 'नीरन्ध्रैरुपगमिते'

निःशेषं शकलितवल्कलाङ्गसारैः

कुर्वद्भिर्भुवमभितः कषायचित्राम् ।

ईशानः सकुसुमपल्लवै[1]र्नगैस्तै-

रातेने बलिमिव रङ्गदेवताभ्यः ॥ ६२

उन्मज्जन्मकर इवामरापगाया

वेगेन प्रतिमुखमेत्य बाणनद्याः ।

गाण्डीवी कनकशिलानिभं भुजाभ्या-

माजघ्ने विषमविलोचनस्य वक्षः ॥ ६३

---

**निःशेषमिति ॥** ईशानः शिवः । शानच्प्रत्ययः । निश्शेषं यथा तथा शकलितानि वल्कलानि त्वचोऽङ्गानि शाखाः सारो मज्जा च येषां तैर्भुवमभितः कषायो यो रागः । स्वरसेन रञ्जनमिति यावत् । 'रागे क्वाथे कषायोऽस्त्री' इति वैजयन्ती । तेन चित्रां विचित्रवर्णां कुर्वद्भिः सकुसुमपल्लवैस्तैर्नगैर्वृक्षै रङ्गे रणरङ्गे या देवतास्ताभ्यो बलिं पूजामिवातेने ॥ ६२

**उन्मज्जन्निति ॥** गाण्डीव्यर्जुन उन्मज्जन्नुत्तरन्मकरो जलग्रहविशेषोऽमरापगाया गङ्गाया इव बाणनद्या बाणप्रवाहाद्वेगेन प्रतिमुखमभिमुखमेत्यागत्य कनकशिलानिभम् । कनकग्रहणं काठिन्यातिशयद्योतनार्थम् । विषमविलोचनस्य त्र्यम्बकस्य वक्षो हृदयं भुजाभ्यामाजघ्ने ताडितवान् । अत्रात्मनेपदं विचार्यम् । 'आङो यमहनः' इत्यत्राकर्मकाधिकारात् 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात् । न च शिवस्य प्रतिमुखमित्यन्वयात्कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्ष आजघ्न इत्यर्थ इति वाच्यमनौचित्याचरणात् । न हि युद्धाय संनद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनमाचरन्ति । किं । च अनन्तरं वक्ष्यमाणभवकर्तृकाविनयसहनरोधाद्वक्ष एवेत्यन्वयस्यान्यवधानाच्च पूर्वैरिव दूषितत्वात् । अतो व्याकरणान्तराद्द्रष्टव्यम् । केनचित्तु 'त्र्यम्बकस्य वक्षः प्राप्य' इत्यध्याहारं स्वीकृत्यात्मकर्मकत्वादात्मनेपदमाहुः ॥ ६३

---

1 'वनौघैः'

अभिलषत उपायं विक्रमं कीर्तिलक्ष्म्यो-
[1]रसुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनो-
रविनयमपि सेहे पाण्डवस्य स्मरारिः ॥ ६४

इति श्रीभारविकृतौ किरातार्जुनीये लक्ष्मीपदलाञ्छने महाकाव्ये
सप्तदशस्सर्गः ॥

---

**अभिलषत इति ॥** कीर्तिलक्ष्म्योरुपायं साधनभूतमरिसैन्यैरसुगमं दुरासदं विक्रममभिलषतः । सूनुपक्षे यत्किंचिन्महत्फलं प्रार्थयमानस्येत्यर्थः । अत एवाङ्कमन्तिकमभ्यागतस्योत्सङ्गमारूढस्य च पाण्डवस्याविनयं स्मरारिः । अनेन भक्तवात्सल्यमेव सहनकारणमिति सूच्यते । शिशुत्वे शैशवे सुप्रियस्य परमप्रेमास्पदस्य । कुतः । एक एव सूनुस्तस्यैकसूनोरविनयं जनक इव सेहे सोढवान् ॥ ६४

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायां सप्तदशस्सर्गः ॥

---

1 'असुकरम्'

## ॥ अष्टादशस्सर्गः ॥

तत उदग्र इव द्विरदे मुनौ रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः प्रतिजघान [1]घनैरिव मुष्टिभिः ॥ १

हरपृथासुतयोर्ध्वनिरुत्पतन्नमृदुसंवलिताङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः प्रतिननाद दरीषु [2]दरीभृतः ॥ २

शिवभुजाहतिभिन्नपृथुक्षतीः सुखमिवानुबभूव कपिध्वजः ।

---

**तत इति** ॥ ततो मुष्टिनियुद्धानन्तरमुदग्रे महति द्विरदे गज इव भीमे भुजावेवायुधे यस्य तथाभूते रणमुपेयुषि मुनौ शङ्करः स्वयमपि सबाणधि सतूणं धनुरपास्य त्यक्त्वा मुष्टिभिर्घनैर्लोहमुद्गरैरिव प्रतिजघान। प्राग्जुनिकृताघातस्य प्रतिघातं कृतवानित्यर्थः। 'घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः' इति वैजयन्ती। 'घनस्तु लोहमुद्गरे' इति विश्वः। यद्यपि मुष्टिशब्दः 'मुष्ट्या तु बद्धया। सरलिः स्यादरलिस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः। उभयथा प्रयोगाद्विलिङ्गस्तथाप्यत्रोपमानसारूप्यात्पुंलिङ्गो ग्राह्यः। द्रुतविलम्बितं वृत्तम् ॥ १

**हरेति** ॥ हरपृथासुतयोः शिवार्जुनयोरमृदु निबिडं यथा तथा संवलिताः सङ्घटिता अङ्गुलयो येषां ते। मुष्टिकृता इत्यर्थः। तेषु पाणिषु जातस्तथोक्तः। स्फुटन्तीनां विदलन्तीनामनल्पशिलानामारव इव दारुणो भीषणो ध्वनिरुत्पतन्नुद्गच्छन् दरीभृतो गिरेर्दरीषु गुहासु प्रतिननाद प्रतिदध्वान ॥ २

**शिवेति** ॥ कपिध्वजः शिवस्य भुजाहतिभिर्मुष्टिघातैर्भिन्ना विदीर्णा याः पृथवो महत्यः क्षतयः प्रहारा व्रणास्ताः सुखमिवानुबभूव। दुःखकरीरपीति भावः। क्षतिदुःखं नाजीगणदित्यर्थः। ननु दुःसहदुःखवेगेषु कथमगणनेत्यत्राह—

---

1 'शरैः'     2 'महीभृतः'

क इव नाम बृहन्मनसां भवेदनुकृतेरपि सत्त्ववतां क्षमः ॥ ३

व्रणमुखच्युतशोणितशी[1]करस्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ जलधरेण समानमुमापतिः ॥ ४

उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः ॥ ५

निपतितेऽधिशिरोधरमायते सममरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना लुलितदृष्टि मदादिव चस्खले ॥ ६

---

क इति । क इव नाम को नु खलु सत्त्ववतां सत्त्वाधिकानां बृहन्मनसां तेजस्विनामनुकृतेरनुकरणस्यापि क्षमो भवेत् । मनस्विनां चरितं नटवदनुकर्तुमपि न कश्चिदीष्टे तस्याचरणं तु दूरापास्तमिति भावः । रौद्ररसाविष्टमनसां मनस्विनां कुतः सुखदुःखगणनेति भावः ॥ ३

**व्रणेति ॥** व्रणमुखेभ्यश्च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलासदृशं भुजान्तरं वक्षो यस्य स यथोक्त उमापतिरभिनवमौषसरागं सन्ध्यारागं बिभर्तीति तथोक्तेन जलधरेण समानं तुल्यं यथा तथा बभावित्युपमा ॥ ४

**उरसीति ॥** शूलभृतः शिवस्योरसि प्रहिताः प्रयुक्ता अर्जुनस्य मुष्टयः पृथुनि विशाले सह्यमहीभृतः सह्याद्रे रोधसि तटे भृशरयास्तीव्रवेगाः सिन्धोः समुद्रस्य महोर्मय इव मुहुः प्रतिहतिं ययुः ॥ ५

**निपतित इति ॥** अयुगानि चक्षूंषि यस्य तस्यायुगचक्षुषस्त्रिलोचनस्यायते दीर्घे अरत्नियुगे अरत्न्योर्बद्धमुष्ट्योर्हस्तयोर्युगे युग्मे । 'हस्तो मुष्ट्या तु बद्धया । सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः । प्रकृते तु मुष्टिमात्रविवक्षया प्रयोगः । शिरोधरायामधीत्यधिशिरोधरमधिकन्धरं समं युगपन्निपतिते सति । किरीटिनार्जुनेन मदादिव त्रीणि चत्वारि वा त्रिचतुराणि । 'संख्ययाव्ययासन्न-' इत्यादिना बहुव्रीहिः । चतुरोऽच्प्रकरणे 'त्र्युपाभ्यामुपसंख्यानम्'

---

1 'शीकरैः'

अभिभवो[1]दितमन्युविदीपितः समभिसृत्य भृशं जवमोजसा ।
[2]भुजयुगेन विभज्य समाददे शशिकलाभरणस्य भुजद्वयम् ॥ ७

प्रववृतेऽथ महाहवमल्लयोरचलसञ्चलनाहरणो रणः ।
करणशृङ्खलसङ्कलनागुरुर्गुरुभु[3]जायुधगर्वितयोस्तयोः ॥ ८

अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना ।
समधिरूढमजेन नु जिष्णुना स्विदिति वेगवशान्मुमुहे गणैः ॥ ९

---

इति समासान्तोऽच्प्रत्ययः । तेषु त्रिचतुरेषु पदेषु लुलितदृष्टि घूर्णितनेत्रं यथा तथा चस्खले स्खलितम् । भावे लिट् ॥ ६

**अभिभवेति ॥** अभिभवेनोक्तरूपेण परिभवेनोदित उत्पन्नो यो मन्युः क्रोधस्तेन विदीपितः प्रज्वलितः सोऽर्जुनो भृशं जवं समभिसृत्य समभिद्रुत्यौजसा बलेन शशिकलाभरणस्येन्दुमौलेः शिवस्य भुजद्वयं भुजयुगेन विभज्य वियोज्य समाददे जग्राह ॥ ७

**प्रववृत इति ॥** अथ महाहवे महारणे मल्लयोर्बलीयसोः । 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' इति विश्वः । गुरू भुजावेवायुधं तेन गर्वितयोस्तयोः शिवार्जुनयोः करणानि करचरणबन्धनान्येव शृङ्खलानि तेषां सङ्कलना सङ्घटना तया गुरुर्दुस्तरस्तथाचलस्य हिमाद्रेः सञ्चलनं कम्पस्तस्याहरण आरोपकः । कर्तरि ल्युट् । रणः प्रववृते प्रवृत्तः ॥ ८

**अयमिति ॥** अयं पुरोवर्ती पुमानसौ भगवान्प्रसिद्धो देवः । तदुक्तम्—'इदमः समक्षरूपं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥' ॥' इति । उत पाण्डवः । अयं हि तिष्ठदवस्थायां भ्रम इति वेदितव्यम् । अथ पतनावस्थायामाह—मुनिनावागधः स्थितमुत शशिमौलिना । अजेन देवेन नु समधिरूढमुपरि स्थितमथ जिष्णुना स्विदर्जुनेन वा समधिरूढमित्येवं गणैः प्रमथैर्वेगवशान्मुमुहे भ्रान्तम् । 'मुह वैचित्त्ये' । भावे लिट् ॥ ९

---

1 'उत्थित'  2 'करयुगेन'  3 'आयुधयोरुभयोः'

[1]प्रचलिते चलितं स्थितमास्थिते [2]विनमिते नत[3]मुन्नतमुन्नतौ ।
वृषकपिध्वजयोरसहिष्णुना मुहुरभावभयादिव भूभृता ॥ १०

करणशृङ्खलनिःसृतयोस्तयोः कृतभुजध्वनि वल्गु विवल्गतोः ।
चरण[4]पातनिपातितरोधसः प्रससृपुः सरितः परितः स्थलीः ॥

वियति वेगपरिप्लुतमन्तरा समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षितिर्निजगृहे तिसृणां जयिनं पुराम् ॥ १२

---

**प्रचलित इति** ॥ असहिष्णुना तयोर्भारमसहमानेन भूभृता शैलेनाभावभयाद्विनाशभयादिव मुहुर्वृषश्च कपिश्च ध्वजे ययोस्तयोर्वृषकपिध्वजयोः प्रचलिते चलने सति चलितं प्रचेले। आस्थिते तूष्णीमवस्थाने स्थितं तथैव तस्थे। विनमिते सम्यगाक्रमणे सति नतं नम्रीभूतम्। अनामीति यावत्। उन्नतावुन्नमने सत्युन्नतमुदनामि। सर्वत्र भावे क्तः ॥ १०

**करणेति** ॥ करणानि करचरणबन्धविशेषास्तान्येव शृङ्खलानि तेभ्यो निःसृतयोः। मुहुस्त्यक्तबन्धयोरित्यर्थः। कृतो भुजध्वनिर्भुजास्फोटनशब्दो यस्मिन्कर्मणि तत्तथा वल्गु सुन्दरं च यथा तथा विवल्गतोरुत्प्लवमानयोस्तयोर्हरपार्थयोश्चरणपातैः पादक्षेपैर्निपातितानि रोधांसि यासां ताः सरितो नद्यः स्थलीः परितः स्थलीषु प्रससृपुः प्रसृताः। 'अभितःपरितः-' इत्यादिना द्वितीया। 'जानपद-' इत्यादिना कृत्रिमार्थे ङीप्। कूलपातक्षोभादुद्वेलसलिलाः सरितः स्थलानि प्लावयन्नित्यर्थः। एतेन तयोर्भार उक्तः ॥ ११

**वियतीति** ॥ वियत्यन्तरिक्षे वेगेन परिप्लुतमुत्पतितं तिसृणां पुरां जयिनं त्रिपुरान्तकम्। 'जिदक्षि-' इत्यादिनेनिप्रत्ययः। कपिध्वजोऽर्जुनश्चरणाभ्यां पादाभ्यामानमितक्षितिः सन्। रयेण वेगेन समभिसृत्याभिद्रुत्यान्तरा मध्येमार्गं चरणयोः पदयोर्निजगृहे निगृहीतवान्। उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राहेत्यर्थः ॥ १२

---

1 'प्रचलितं चलिते'; 'प्रचलने चलितम्'; 'प्रचलितं चलने'
2 'विनमने' 3 'विभ्रम' 4 'आहति'

विस्मितः सपदि तेन कर्मणा कर्मणां क्षयकरः परः पुमान् ।
क्षेप्तुकाममवनौ [1]तमक्लमं निष्पिपेष परिरभ्य वक्षसा ॥ १३

तपसा तथा न मुदमस्य ययौ भगवान्यथा विपुलसत्त्वतया ।
गुणसंहतेः समतिरिक्तमहो निजमेव सत्त्वमुपकारि सताम् ॥१४

अथ हिमशुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया ।
स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५

सहशरधि निजं तथा कार्मुकं वपुरतनु तथैव संवर्मितम् ।

---

**विस्मित इति ॥** तेन कर्मणा चरणग्रहणरूपेण सपदि विस्मितः सविस्मयः कर्मणां क्षयकरः । मोक्षप्रद इत्यर्थः । परः पुमान्हरोऽवनौ क्षितौ क्षेप्तुं कामो यस्य तम् । 'तुं काममनसोरपि' इति मकारलोपः । अक्लमक्लान्तं तं पार्थं वक्षसा परिरभ्य निष्पिपेष । गाढमालिलिङ्गेत्यर्थः । रथोद्धतावृत्तम् ॥ १३

**तपसेति ॥** भगवान्देवोऽस्यार्जुनस्य विपुलसत्त्वतया बहुसत्त्व-सम्पदा । धैर्यसम्पत्त्येति यावत् । यथा मुदं ययौ तथा तपसा मुदं न ययौ । तथा हि सतां गुणसंहतेस्तपःसेवादिगुणसङ्घातात्समतिरिक्तमतिशयितं निजं सत्त्वमे-वोपकार्युपकारकमहो । प्रमिताक्षरावृत्तम् ॥ १४

**अथेति ॥** अथ हिमशुचिना हिमशुभ्रेण भस्मना भूषितं शिरसीन्दु-लेखया विराजितं शोभितमतिमनोहरं सुन्दरं स्ववपुर्दधतं किरातरूपं विहाय-निजविग्रहं दधानं हरमुदीक्ष्य पाण्डवो ननाम प्रणतवान् । अपरवक्त्रं वृत्तम्— 'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ ' इति लक्षणात् ॥ १५

**सहेति ॥** वृषभस्येव गतिर्यस्य सोऽर्जुनस्तस्मिन्समये सह शरधिभ्यां वर्तत इति सहशरधि सनिषङ्गम् । 'वोपसर्जनस्य' इति विकल्पात्सहशब्दस्य न सभावः । निजं कार्मुकं गाण्डीवं तथैव पूर्ववदेव संवर्मितं सम्यक्कवचितमतनु

---

1 'गतक्लमम्'

निहितमपि [1]तथैव पश्यन्नसिं वृषभगतिरुपाययौ विस्मयम् ॥

सिषिचुरवनिमम्बुवाहाः शनैः सुरकुसुममियाय चित्रं दिवः ।
विमलरुचि भृशं नभो दुन्दुभेर्ध्वनिरखिलमनाहतस्यानशे ॥ १७

आसेदुषां गोत्रभिदोऽनुवृत्त्या गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैर्द्यौराचिता तारकितेव रेजे ॥ १८

हंसा बृहन्तः सुरसद्मवाहाः संह्लादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्यमाणैर्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १९

महन्निजं वपुस्तथैव विहितं यथापूर्वं स्थापितमसिमपि खड्गं च तथैव पश्यन्विस्मयमुपाययौ। क्वचित्त 'वृषभगतिम्' इति पाठः। तत्र वृषभगतिं शिवं च पश्यन्विस्मयमुपाययावित्यर्थः। प्रमुदितवदना वृत्तम्—'प्रमुदितवदना भवेन्नौ रौ' इति लक्षणात् ॥ १६

सिषिचुरिति ॥ अम्बुवाहाः शनैरवनिं सिषिचुरुक्षांचक्रुः। दिवोऽन्तरिक्षाच्चित्रं विचित्रं सुरकुसुमं मन्दारकुसुमानि। जातावेकवचनम्। इयाया-जगाम। अनाहतस्याताडितस्य दुन्दुभेः। जातावेकवचनम्। ध्वनिः शब्दो विमलरुचि प्रसन्नमखिलं नभो भृशमानशे व्याप। अताडिता एव दुन्दुभयो नेदुरित्यर्थः। सर्वमिदमस्य सर्वलोकहितार्थित्वादिति वेदितव्यम् ॥ १७

आसेदुषामिति ॥ गोत्रभिद इन्द्रस्यानुवृत्त्यानुसरणेनासेदुषामासन्नानां भुवनत्रयस्य गोपायकानां रक्षकाणां लोकपालादीनाम्। 'गुपूधूप—' इत्यादिनायप्रत्ययः। तदन्ताण्ण्वुल्। रोचिष्णवः प्रकाशनशीला रत्नावलयो येषां तैः। 'अलंकृञ्—' इत्यादिनेष्णुच्प्रत्ययः। विमानैः पुष्पकैराचिता व्याप्ता द्यौस्तारकितया सञ्जाततारकेव रेजे। उत्प्रेक्षालङ्कारः ॥ १८

हंसा इति ॥ बृहन्तो महान्तः सुरसद्मानि विमानानि वहन्तीति सुरसद्मवाहाः कर्मण्यण्। संह्लादीनि निह्लादीनि मुखराणि कण्ठाभरणानि किङ्किण्यो येषां ते पतन्तो धावन्तो हंसाः प्रयत्नेन विकीर्यमाणैर्विक्षिप्यमाणैरग्रपक्षैः पक्षाग्रैर्व्योम्नः। परिष्वङ्गमालिङ्गनं चक्रुरिवेत्युत्प्रेक्षा ॥ १९

1 'तथा'

मुदितमधुलिहो [1]वितानीकृताः स्रज उपरि वितत्य सांतानिकीः ।
जलद इव निषेदिवांसं वृषे मरुदुपसुखयाम्बभूवेश्वरम् ॥ २०

कृतधृति परिवन्दितेनोच्चकैर्गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी स्तुतिरिति जगदे हरेः सूनुना ॥

शरणं भवन्तमतिकारुणिकं भव भक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित भवन्ति भये ससुरासुरस्य जगतः शरणम् ॥

विपदेति तावदवसादकरी न च कामसम्पदभिकामयते ।

---

**मुदितेति ॥** अथ मरुद्वायुर्जलदे मेघ इव वृषे निषेदिवांसमुपविष्टमीश्वरं मुदिता मधुलिहो भृङ्गा याभिस्ता वितानीकृता उल्लोचाकाराः कृताः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । सान्तानिकीः सन्तानकुसुमविकाराः स्रजः । मन्दारमाला इत्यर्थः । सन्तानशब्दाद्विकारार्थे ठक् । 'सन्तानः कल्पवृक्षश्च' इत्यमरः । उपरि वितत्य विस्तार्योपसुखयांबभूव प्रह्लादयामास ॥ २०

**कृतेति ॥** अभिन्नरोमोद्गमैरविरलरोमाञ्चैर्गणपतिभिः प्रमथमुख्यैरुच्चकैः परिवन्दितेन साधु साध्विति संस्तुतेन । 'वदि अभिवादनस्तुत्योः' कर्मणि क्तः । हरेः सूनुनार्जुनेन तपसि कृतं फलं भगवत्साक्षात्कारलक्षणं येन तस्मिन् । कृतफले सतीत्यर्थः । कृतधृति कृतसन्तोषं यथा तथा फलज्यायसी फलाधिकेति वक्ष्यमाणा स्तुतिर्जगदे कथिता ॥ २१

**शरणमिति ॥** हे अजित अपराजित हे भव, अतिकारुणिकमतिदयालुम् । 'तदस्य प्रयोजनम्' इति ठक् । भक्तिगम्यं भक्तिसालसुलभं भवन्तं रक्षकमधिगम्य जितमृत्यवो विगतमरणाः । अमरा भूत्वेत्यर्थः । जनाः ससुरासुरस्य जगतो भय आपदि शरणं स्वयं रक्षितारो भवन्ति । 'शरणं गृहरक्षित्रोः' इति विश्वः । प्रमिताक्षरावृत्तम् ॥ २२

**विपदिति ॥** हे ईश, यावत्तव नतिः प्रणामो न क्रियते । पुरुषेणेति शेषः । तावदेवैकं पुरुषमेकाकिनं सन्तमवसादकरी क्षयकरी विपदेति प्राप्नोति ।

---

1 'वितानाकृतीः'

न नमन्ति चैकपुरुषं पुरुषास्तव यावदीश न नतिः क्रियते ॥

संसेवन्ते दानशीला विमुक्त्यै [1]सम्पश्यन्तो जन्मदुःखं पुमांसः ।
यन्निःसङ्गस्त्वं फलस्यानतेभ्यस्तत्कारुण्यं केवलं न स्वकार्यम् ॥

प्राप्यते यदिह दूरमगत्वा यत्फल[2]त्यपरलोकगताय ।
तीर्थमस्ति न भवार्णवबाह्यं सार्वकामिकमृते भवतस्तत् ॥ २५

---

कामसम्पन्मनोरथसम्पच्च नाभिकामयते नेच्छति । पुरुषाश्चान्ये लोकास्तमेकं पुरुषं तव स्तुतिमकुर्वाणं न नमन्ति न वशे वर्तन्ते । नानिष्टनिवृत्तिर्नापीष्टप्राप्तिरित्यर्थः । यदा तु त्वां प्रणमन्ति तदैव सर्वं लक्ष्यत इति भावः ॥ २३

**संसेवन्त इति ॥** दानं शीलं स्वभावो निजधर्मो येषां ते दानशीलाः । त्वामेवोद्दिश्य दानं कुर्वन्त इत्यर्थः । 'तस्माद्दानं परमं वदन्ति' इति श्रुतेरिति भावः । कुतः ? ततो जन्मदुःखं सम्पश्यन्तोऽनुभवन्तः पुमांसो विमुक्त्यै मोक्षाय संसेवन्ते । भवन्तमिति शेषः । न तच्चित्रम् । किंत्वानतेभ्यः प्रणम्रेभ्यो निःसङ्गो निःस्पृहस्त्वं यत्फलसि फलं ददासि । तेषां फलार्थित्वादिति भावः । तत्केवलं निरुपाधिकं कारुण्यं । करुणा स्वार्थे ष्यञ् । 'कारुण्यं करुणा घृणा' इत्यमरः । न स्वकार्यम् । एतदेव चित्रम् । केवलं परार्थत्वादिति भावः । शालिनीवृत्तम् ॥ २४

**प्राप्यत इति ॥** यत्तीर्थमिहास्मिँल्लोके दूरमगत्वा प्राप्यते । स्मृतिमात्रसुलभमित्यर्थः । गङ्गादिकं तु न तथेति भावः । तत्तीर्थमपरलोकगताय फलति फलं प्रयच्छति । अत्रापि स्मरणमात्रादेवेति भावः । भवः संसारः स एवार्णवस्ततो बाह्यं बहिर्भवं संसारातीतम् । मोक्षपदमित्यर्थः । 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञ्यप्रत्ययः । सर्वे कामाः प्रयोजनमस्येति सार्वकामिकम् । 'तदस्य प्रयोजनम्' इति ठक् । तत्तादृक्तरन्त्यनेनेति तीर्थं तारकं भवतस्त्वदृते । 'अन्यारात्—' इत्यादिना पञ्चमी । अन्यन्नास्ति । औपच्छन्दसिकं वृत्तम् ॥ २५

---

1 'सम्पत्स्यन्तः' 2 'अमरलोक'

व्रजति शुचि पदं त्वयि प्रीतिमान्प्रतिहतमतिरेति घोरां गतिम् ।
इयमनघ निमित्तशक्तिः परा तव वरद न चित्तभेदः क्वचित् ॥

दक्षिणां प्रणतदक्षिण मूर्तिं तत्त्वतः शिवकरीमविदित्वा ।
रागिणापि विहिता तव भक्त्या संस्मृतिर्भव भवत्यभवाय ॥ २७

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः ।
सम्यग्दृष्टिस्तस्य पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥ २८

---

**व्रजतीति** ॥ हे वरद त्वयि प्रीतिमान्नरः शुचि निर्मलं पदं कैवल्यं मुक्तिं व्रजति । 'मुक्तिः कैवल्यनिर्वाण—' इत्यमरः । प्रतिहतमतिरुपहतबुद्धिः । त्वद्द्वेषीत्यर्थः । घोरां गतिं तीव्रं नरकमेति प्राप्नोति । न चैतावता तव रागद्वेषकलङ्कपङ्क इत्याह—इयमिति । हे अनघ निष्कलङ्क, इयम् । भक्ताभक्तयोरिति शेषः । विधेयप्राधान्यात्स्त्रीलिङ्गता । परा दुस्तरा निमित्तशक्तिर्निमित्तभूता शक्तिः स्वचेष्टितमहिमा । तव क्वचिद्भक्ते द्वेषिणि वा कुत्रापि चित्तभेदो बुद्धिवैषम्यं नास्ति । स्वकर्मणैव जन्तुस्तरति पतति वा । त्वं साक्षितया सर्वत्र सम इत्यर्थः ॥ २६

**दक्षिणामिति** ॥ हे भव, हे प्रणतदक्षिण प्रणतेषु दाक्षिण्यसम्पन्न, दाक्षिण्यं परच्छन्दानुवर्तित्वम् । 'दक्षिणःसरलावामपरच्छन्दानुवर्तिषु' इति विश्वः । शिवकरीं श्रेयस्करीम् । 'कृञो हेतु—' इत्यादिना टप्रत्यये ङीप् । तव दक्षिणां मूर्तिं तत्त्वतो याथार्थ्येनाविदित्वापि रागिणा रागद्वेषवतापि भक्त्या विहिता तव संस्मृतिः सम्यक्स्मरणभवाय संसारनिवृत्तये । प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । भवति । तत्त्वज्ञानं विनापि भक्तिपूर्विका तव संस्मृतिरेव मुक्तिनिदानमित्यर्थः । स्वागतावृत्तम् ॥ २७

**दृष्ट्वेति** ॥ प्रेक्षया बुद्ध्या करोतीति प्रेक्षाकारी विमृश्यकारी दृश्यानि द्रष्टव्यानि दृष्ट्वा ज्ञात्वा आचरणीयानि कर्तव्यानि च विधाय कृत्वाऽपायैर्मुक्तं नाशवर्जितं पदं याति । 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेः ।

[1]युक्ताः स्वशक्त्या मुनयः प्रजानां हितोपदेशैरुपकारवन्तः ।
समुच्छिनत्सि त्वमचिन्त्यधामा कर्माण्युपेतस्य [2]दुरुत्तराणि ॥

संनिबद्धमपहर्तुमहार्यं भूरि दुर्गतिभयं भुवनानाम् ।
[3]अद्भुताकृतिमिमामतिमायस्त्वं बिभर्षि करुणामय मायाम् ॥ ३०

न रागि चेतः परमा विलासिता
वधूः [4]शरीरेऽस्ति न चास्ति मन्मथः ।

---

ज्ञानकर्मभ्यां मुक्तिरित्यर्थः । किन्तु तेऽपि ज्ञानकर्मणी त्वद्विषय एव मुक्तिसाधनं नान्यविषय इत्याशयेनाह—सम्यगिति । यः पुमान्परं पुरुषोत्तमत्वेन सर्वोत्कृष्टं त्वां पश्यति तस्य सम्यग्दृष्टिः सम्यग्ज्ञानम् । यश्च त्वामुपास्ते सेवते स एव विधेयं विधत्ते । साधुकारीत्यर्थः । मत्तमयूरं वृत्तम् । लक्षणं तूक्तम् ॥ २८

**युक्ता इति ॥** मुनयो व्यासादयः स्वशक्त्या निजयोगमहिम्ना युक्ताः । तथा हितोपदेशैर्विधिनिषेधवाक्यैः स्मृतीतिहासपुराणमुखेन प्रजानामुपकारवन्तः कृतोपकारश्च । मोक्षप्रदस्तु तेषामन्येषां च त्वमेवेत्याह—समिति । अचिन्त्यधामा-अचिन्त्यमहिमा त्वमेवोपेतस्य शरणं प्राप्तस्य प्रपन्नस्य सम्बन्धीनि दुरुत्तराणि सुदुस्तराणि कर्माणि बन्धकानि पुण्यपापानि समुच्छिनत्सि नाशयसि । ते त्वत्रासमर्था एवेति भावः ॥ २९

**संनिबद्धमिति ॥** अतिक्रान्तो मायां बन्धरूपामतिमायः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । हे करुणामय हे कृपालो, संनिबद्धं स्वकर्मणा दृढबद्धमत एवाहार्यमन्यैरनुच्छेद्यं भूरि प्रभूतं भुवनानां दुर्गतिभयं नरकभयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । अपहर्तुमद्भुताकृतिं विचित्ररूपामिमां मायां दृश्यमानां लीलाविग्रहरूपां बिभर्षि । अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः भवतस्तु परोपकारार्थ इत्यर्थः ॥ ३०

**न रागीति ॥** हे देव, चेतस्तव चित्तं रागि रागयुक्तं न । परमयोगित्वादिति भावः । तथापि परमा निरतिशया विलासिता शृङ्गारादिचेष्टाशीलता ।

---

1 'मुक्ताः' 2 'सुदुस्तराणि' 3 'अद्भुताकृतिमयीमतिचित्राम्'
4 'शरीरेण तवास्ति'

नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम् ॥ ३१

तवोत्तरीयं करिचर्म साङ्गजं
ज्वलन्मणिः सारसनं महानहिः ।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति ॥ ३२

अविग्रहस्याप्यतुलेन हेतुना [1]समेतभिन्नद्वयमूर्ति तिष्ठतः ।
तवैव नान्यस्य [2]जगत्सु [3]दृश्यते विरुद्धवेषाभरणस्य कान्तता ॥

---

भिक्षाटनादिषु विहरणेन तौर्यत्रिकव्यसनितया चेति । किञ्च । शरीरेऽर्धाङ्गे वधूरस्ति । प्रसिद्धं चैतदिति भावः । तथापि मन्मथः कामश्च नास्ति । तस्य भस्मीकरणादिति भावः । किञ्च । उषसि । प्रातः सन्ध्यायां धातुर्ब्रह्मणो नमस्क्रिया वन्दनम् । स्वयं जगद्वन्द्यस्यापीत्यर्थः । इतीत्थं विरुद्धमिदमुक्तं तवेहितं चेष्टितं निसर्गतो दुर्बोधं दुराकलनीयम् । दुर्ग्रहमित्यर्थः । अदृष्टपूर्वत्वादिति भावः । वंशस्थं वृत्तम् ॥ ३१

**तवेति ॥** हे देव, तव साङ्गजं सलोमकं करिचर्मोत्तरीयं संव्यानम् । दुःस्पर्शमिति भावः । 'संव्यानमुत्तरीयं च' इत्यमरः । ज्वलन्मणिर्ज्वलद्रत्नो महानहिः सारसनं कटिभूषाविशेषः । योऽन्येषां प्राणहर इत्यर्थः । 'क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु' इत्यमरः । आस्यपङ्क्तिः कपालमाला स्रङ्माल्यम् । शवभस्म चन्दनम् । उभयत्राप्यस्पृश्यममङ्गलं चेति भावः । किञ्च एतानि वस्तूनि हिमांशोः कला च समं तुल्यतया चकासति दीप्यन्ते । त्वदाश्रयवशादरम्यस्यापि रम्यतेति किमशक्यं तवेति ॥ ३२

**अविग्रहस्येति ॥** अविग्रहस्य वस्तुतोऽशरीरस्यापि सतोऽतुलेन दुर्बोधत्वादसदृशेन हेतुना । केनापि कारणेनेत्यर्थः । समेता सङ्गता भिन्ना विलक्षणा च द्वयी द्विविधा स्त्रीपुंसात्मिका मूर्तिर्यस्मिन्कर्मणि तत्समेतभिन्नद्वयमूर्ति यथा तथा तिष्ठतः । अशरीरस्य शरीरमेव विरुद्धम् । तदपि नारीनरात्मकमिति किमत-

---

1 'समेत्य' 2 'जनस्य' 3 'विद्यते'

आत्मलाभपरिणामनिरोधैर्भूतसङ्घ इव न त्वमुपेतः ।
तेन सर्वभुवनातिग लोके नोपमान[1]मसि नाप्युपमेयः ॥ ३४

त्वमन्तकः स्थावरजङ्गमानां त्वया जगत्प्राणिति [2]देव[3]विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि त्वं कारणं कारणकारणानाम् ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
[4]यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।

श्चित्रमस्तीति भावः । एवंविधस्य तवैव जगत्सु विरुद्धे वेषाभरणे पूर्वोक्ते यस्य तस्य विरुद्धवेषाभरणस्यापि सतः कान्तता रमणीयता दृश्यते । अन्यस्य न दृश्यते । तस्मादचिन्त्योऽसौ तव महिमेति भावः ॥ ३३

**आत्मेति ॥** हे देव, त्वं भूतसङ्घ इव शरीरादिसङ्घात इव । आत्मलाभपरिणामनिरोधैर्जन्मजरामरणैरुपेतो युक्तो नासि । तेन कारणेन हे सर्वभुवनातिग सर्वलोकोत्तर उपमीयतेऽनेनेत्युपमानं नासि । उपमीयते यत्तदुपमेयमपि । नासि न कश्चित्त्वादृशोऽस्ति । त्वमपि नान्यसदृशः । अनन्यसाधारणत्वादित्यर्थः । वृत्तमुक्तम् ॥ ३४

**त्वमिति ॥** हे देव, त्वं स्थावरजङ्गमानामन्तकः संहर्ता । त्वया हेतुना विश्वं सर्वं जगत्प्राणिति जीवति । त्वं योगिनां हेतुः प्रवर्तकं कर्म फलं भोगश्च ते हेतुफले रुणत्सि निवर्तयसि । तेषां त्वमेव बन्धविमोचक इत्यर्थः । किं च । त्वं कारणानि भूतानि तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां कारणकारणानां कारणं प्रकृत्यादिद्वारोत्पत्तिस्थानम् । अत्र सर्वत्र 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिः प्रमाणमिति भावः ॥ ३५

**रक्षोभिरिति ॥** रक्षोभी राक्षसैः सुरमनुजैः सुराश्च मनुजाश्च तैर्देवमनुष्यैर्दितेः सुतैर्दैत्यैर्वा लोकेषु यदविकलं सम्पूर्णमाधिपत्यमाप्तं प्राप्तं तद्वे भव,

1 'अपि' 2 'नाथ' 3 'सर्वम्' 4 'यम्'

[1]पाविन्याः शरणगतार्तिहारिणे[2]तन-
माहात्म्यं [3]भव भवते नमस्क्रियायाः ॥ ३६

तरसा भुवनानि यो बिभर्ति ध्वनति ब्रह्म यतः परं पवित्रम् ।
परितो दुरितानि यः पुनीते शिव तस्मै पवनात्मने नमस्ते ॥३७

भवतः स्मरतां सदासने जयिनि [4]ब्रह्ममये निषेदुषाम् ।
दहते भवबीज[5]सन्ततिं शिखिनेऽनेकशिखाय ते नमः ॥ ३८

---

शरणगतानामार्तिहारिणे दुःखनाशकाय भवते तुभ्यं नमस्क्रियायाः । 'नमः-स्वस्ति-' इत्यादिना चतुर्थी । पाविन्याः पापहारिण्या माहात्म्यं सामर्थ्यम् । 'न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः' इति भावः । प्रहर्षिणीवृत्तम् ॥ ३६

अथाष्टमूर्तिषु काश्चित्स्तुवन्वायुमूर्तिं तावदाह—

**तरसेति ॥** यः पवनस्तरसा बलेन । 'तरसी बलरंहसी' इति विश्वः । भुवनानि बिभर्ति प्राणात्मना धारयति । यतो यत्प्रेरणात्पवित्रं परं परमं ब्रह्म वर्णात्मकं ध्वनति नदति । 'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते' इति वचनात् । यः पवनः परितो दुरितानि पातकानि पुनीते शोधयति । नाशयतीति यावत् । हे शिव, तस्मै पावयतीति पवनो वायुः स एवात्मा यस्य तस्मै पवनात्मने ते तुभ्यं नमः । वृत्तमुक्तम् ॥ ३७

अथाग्निमूर्तिं स्तौति—

**भवत इति ॥** जयिनि जयशीले सर्वोत्कृष्टे ब्रह्ममये ब्रह्मप्रधाने । तत्प्राप्त्युपायत्वात् । सदासने सम्यगासने । योगासन इत्यर्थः । निषेदुषामुपविष्टानां भवतः स्मरतां भवन्तं ध्यायताम् । 'अधीगर्थ-' इत्यादिना शेषे कर्मणि षष्ठी । भवबीजसन्ततिं संसारनिदानसमूहं भवनिदानकर्मसङ्घातं दहते भस्मीकुर्वतेऽनेकशिखाय बहुज्वालाय शिखिने वह्निमूर्तये ते तुभ्यं नमः ॥ ३८

---

1 'पावन्या' 2 'ते' 3 'तव भव तत्'
4 'ब्रह्मपदे' 5 'संहतिम्'

आबाधामरणभयार्चिषा चिराय

पुष्टेभ्यो [1]भव महता भवानलेन ।

निर्वाणं समुपगमेन यच्छते ते

[2]बीजानां प्रभव नमोऽस्तु जीवनाय ॥ ३९

यः सर्वेषामावरीता वरीयान्[3]सर्वैर्भावैर्नावृतोऽनादिनिष्ठः ।

मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै ॥ ४०

---

अथ जलमूर्तिं स्तौति—

**आबाधेति ॥** हे भव, बीजानां प्रभव कारणभूत । 'जीवानाम्' इति पाठे तेषां त्वत्प्रतिबिम्बत्वादिति भावः । आबाधाध्यात्मिकादिदुःखं मरणं पञ्चत्वं ताभ्यां भयं तदेवार्चिर्यस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं पुष्टेभ्यो दग्धेभ्यः समुपगमेन संसेवया निर्वाणं सन्तापशान्तिं यच्छते ददते जीवयतीति जीवनं तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥ ३९

इदानीं नभोमूर्तिं स्तौति—

**य इति ॥** भवेत्यनुवर्तते । भवत्यस्मादयं प्रपञ्च इति भवस्तत्सम्बुद्धौ । सकलजगज्जनकेति यावत् । वरीयानुरुतरः । विभुरित्यर्थः । 'प्रियस्थिर–' इत्यादिनोरुशब्दस्य वरादेशः । यस्त्वं सर्वेषां वस्तूनामावरीताच्छादयिता । वृणोतेस्तृच्प्रत्ययः । सर्वैर्भावैः पदार्थैर्नावृतः केनापि कदाचिदप्यनावृतः स्वयं व्यापकत्वादिति भावः । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्यासावनादिनिष्ठो नित्यः । 'निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । इन्द्रियाणां चक्षुरादीनां मार्गातीतायातीन्द्रियाय । अत एवाविज्ञेयायापरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥

---

1 'शिव' 2 'जीवानां प्रसव' 3 'सर्वश्च त्वम्' 'सर्वैः शश्वत्'

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमो दवीयसे।
अतीत्य वाचां मनसां च गोचरं स्थिताय ते तत्पतये नमो नमः॥

असंविदानस्य ममेश संविदां तितिक्षितुं दुश्चरितं त्वमर्हसि।
[1]विरोध्य मोहात्पुनरभ्युपेयुषां गतिर्भवानेव दुरात्मनामपि॥ ४२

आस्तिक्यशुद्धमवतः प्रियधर्म धर्मं
धर्मात्मजस्य [2]विहितागसि शत्रुवर्गे।

---

**अणीयस इति** ॥ हे भवेत्यनुवर्तते। हे भव, अणीयसे सूक्ष्मतराय तथापि विश्वविधारिणे जगद्धारकाय ते तुभ्यं नमः। अन्तिकस्थायान्तर्यामितया संनिकृष्टाय सते। तथापि दवीयसे दुर्ग्रहत्वाद्दूरतराय ते तुभ्यं नमः। वाचां मनसां च गोचरं विषयमतीत्य स्थितायावाङ्मनसगोचराय। तत्पतये तेषां वाङ्मनसामध्यक्षाय। तदध्यक्षस्तैरेव न दृश्यत इति विरोधः। ते तुभ्यं नमो नमः। 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः। 'सम्भ्रमेण प्रवृत्तिश्चापलम्' इति काशिका। भक्त्युद्रेकाच्च सम्भ्रमः। विरोधाभासोऽलङ्कारः॥ ४१

**असंविदानस्येति** ॥ संविदां ज्ञानानामीश। 'ईशानः सर्वविद्यानाम्' इति श्रुतेरिति भावः। 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः। असंविदानस्याज्ञानस्य। 'समो गम्यृच्छि-' इत्यादिना विदेः सम्पूर्वादकर्मकाच्छानच्प्रत्ययः। मम दुश्चरितं शस्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढुम्। तिजेः सन्नन्तात्तुमुन्प्रत्ययः। त्वमर्हसि योग्योऽसि। ननु तव महानपराधः कथं सोढव्यस्तत्राह—विरोध्येति। मोहादज्ञानाद्विरोध्य वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चाच्छरणागतानां दुरात्मनामपि भवानेव गतिः। त्वं हि शरणागतानामपराधं न गणयसीत्यर्थः॥

सम्प्रति वरं याचते—

**आस्तिक्येति** ॥ हे प्रियो धर्मो यस्येति प्रियधर्म। 'समासान्तो विधिरनित्यः' इति न समासान्तोऽनिच्प्रत्ययः। परलोके मतिरस्तीत्यास्तिकः पारलौकिकः। 'अस्तिनास्तिदिष्टम्-' इति ठक्। तस्य भाव आस्तिक्यं विश्वासस्तेन

---

1 'विरुध्य' 2 'विहितापदि'

संप्राप्नुयां विजयमीश यया समृद्ध्या
तां [1]भूतनाथ विभुतां वितराहवेषु ॥ ४३

इति निगदितवन्तं सूनुमुच्चैर्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदन[2]लपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४

स पिङ्गाक्षः श्रीमान्भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः ।

---

शुद्धं विमलं धर्मं वैदिकाचारमवतः पालयतो धर्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापराधे शत्रुवर्गे विषये हे ईश, यया समृध्यास्त्रवैभवेन विजयं सम्प्राप्नुयां भजेयम् । हे भूतनाथ, आहवेषु तां विभुतां विभूतिमस्त्रविद्यां वितर देहि ॥ ४३

इतीति ॥ इत्युच्चैर्निगदितवन्तं प्रणतशिरसं मघोन इन्द्रस्य सूनुमर्जुनमीशो महादेवः सादरं यथा तथा सान्त्वयित्वोपसान्त्व्यास्मा अर्जुनाय ज्वलतानलेन तेजसा परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं धनुःशब्दोपपदं वेदम् । धनुर्वेदमित्यर्थः । अभ्यादिदेश ददौ । अध्यापयामासेत्यर्थः । 'धनुरुपपदं वेदम्' इत्यत्र धनुरुपपदत्वं वेदशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावादवाच्यवचनदोषमाहुरालङ्कारिकाः । तदुक्तम्—'यदेवावाच्यवचनमवाच्यवचनं हि तत्' इति । समाधानं तु धनुःशब्दविशेषितेन वेदशब्देन । शब्दपरेणेत्यर्थः । परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथञ्चित्सम्पाद्यम् ॥ ४४

स इति ॥ पिङ्गाक्षः पिङ्गलाक्षः श्रीमाञ्छोभावान्भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत् । त्रिगुणस्त्रिशिखः परिवारः आकारो यस्य तत्त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणमायुधं यस्य स तथोक्तः । सूर्यपक्षे तु

---

1 'लोकनाथ' 2 'करालम्'

परीत्येशानं त्रिः स्तुतिभि[1]रुपगीतः सुरगणैः

सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ।। ४५

अथ शशधरमौलेरभ्यनुज्ञामवाप्य

त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै ।

अवितथफलमाशीर्वादमारोपयन्तो

विजयि विविधमस्त्रं लोकपाला वितेरुः ।। ४६

असंहार्योत्साहं जयिनमुदयं प्राप्य तरसा

धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः ।

स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-

स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ।। ४७

---

गुणत्रयपरिवारस्त्रय्यात्मक इति योज्यम् । स धनुर्वेदः सुरगणैः स्तुतिभिरुपगीतः सन् । ईशानं शिवं त्रिस्त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः । परीत्य प्रदक्षिणीकृत्य वीरं पाण्डोः सुतमर्जुनम् । भास्वान्सूर्यो जलदमिव अभिययौ । शिखरिणीवृत्तम् ॥ ४५

**अथेति ॥** अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगा इन्द्रादयो लोकपालाः शशधरमौलेः शम्भोरभ्यनुज्ञामवाप्य पूर्णकामाय तस्मै पाण्डवायावितथफलममोघफलमाशीर्वादमारोपयन्तः प्रयुञ्जाना विजयि जयशीलं विविधं नानाविधमस्त्रमैन्द्रादिकं वितेरुर्ददुः । मालिनीवृत्तम् ॥ ४६

**असंहार्योत्साहमिति ॥** तरसा बलेन वेगेन च जयिनं जयशीलमुदयमस्त्रलाभरूपमभ्युदयम् । अन्यत्रोदयाद्रिं च । प्राप्यासंहार्योत्साहं संहर्तुमशक्यमुद्योगं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहभरं तमोपसंहाररूपं च भारं वोढुं स्थितम् । स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतपदम् । अन्यत्रोपरिवर्तमानम् । तपोलक्ष्म्या दीप्तं तं पाण्डवममरा इन्द्रादयो दिनकृतं सूर्यमिवोच्चैरुपजगुः साधु महाभाग्योऽसीति तुष्टुवुः । शिखरिणीवृत्तम् ॥ ४७

---

1 'उपगीतम्'

व्रज जय रिपुलोकं पादपद्मानतः स-
[1]न्गदित इति [2]शिवेन श्लाघितो देवसङ्घैः ।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥ ४८

इति श्रीभारविकृतौ किरातार्जुनीये लक्ष्मीपदलाञ्छने
महाकाव्ये अष्टादशस्सर्गः ॥

---

**व्रजेति** ॥ शिवेन व्रज स्वपुरं गच्छारिलोकं जयेति गदित उक्तः । यतः पादपद्मानतः शिवपादपङ्कजानतः संस्तथा देवसङ्घैः श्लाघितः स्तुतोऽत एव धृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपुत्रोऽर्जुनो निजगृहं स्वाश्रमं गत्वा प्राप्याथ सादरं यथातथा धर्मसूनुं युधिष्ठिरं ननाम नमश्चक्रे ॥ ४८

इति श्रीपदवाक्यप्रमाण पारावारपारीण श्रीमहामहोपाध्याय
कोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां
घण्टापथसमाख्यायां अष्टादशस्सर्गः समाप्तः ॥
॥ समाप्तमिदं किरातार्जुनीयं नाम महाकाव्यम् ॥

---

1 'उदित' 2 'भवेन'

# ॥ किरातार्जुनीयश्लोकानामकारादिवर्णक्रमेणानुक्रमः ॥

Printed by V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.

# Our Sanskrit Publications.

| | RS. | A. | P. |
|---|---|---|---|
| **Kalidasa's Sakuntala** with Sanskrit Commentary by **Sathavadhana Pandit Srinivasachariar**, Introduction, English Notes and Translation. ... ... | 3 | 8 | 0 |
| **Kalidasa's Malavikagnimitra** with elaborate Introduction, English Notes and Translation by **A. S. Krishna Rao**, M.A., Lecturer in Sanskrit, Loyola College, Madras. ... | 2 | 0 | 0 |
| **Meghasandesa** with Mallinatha's Commentary and exhaustive Introduction, Sanskrit-English Notes and English Translation, by Vidwan **G. J. Somayajulu**, M.A., L.T., Lecturer, Pachaiyappa's College, Madras. ... | 1 | 12 | 0 |
| **Malatimadhavam** with the Commentaries of Tripurari, Nanyadeva and Jagaddhara and English Notes ... | 3 | 0 | 0 |
| **Sri Harsha's Priyadarsika** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami**, M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 1 | 12 | 0 |
| **Sri Harsha's Ratnavali** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami**, M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 2 | 0 | 0 |
| **Sri Harsha's Naganandam** with Introduction, Translation, Notes and Appendix by **P. V. Ramanujaswami**, M.A., Principal, Maharajah's Sanskrit College, Vizianagrum ... | 2 | 0 | 0 |

*Apply to :—*

V. Ramaswamy Sastrulu & Sons,
*292, Esplanade, MADRAS.*